अथ पुनरेत्योत्तरेणाहवनीयं दक्षिणावृत्यासते नेदस्य संज्ञप्यमानस्याध्यक्षा असामेति तस्य न कूटेन प्रघ्नन्ति मानुषꣳ ह कुर्याद्यदस्य कूटेन प्रहण्युर्नो एव पश्चात्कर्णं पितृदेवत्य उ ह[६] स्यान्मुखमेवापिगृह्य विपृक्णेण[७] संज्ञपयन्ति तद्धि देवत्रा तं[८] नाहुर्जहीति न मारयेति मानुषꣳ ह कुर्याद्यदेनं ब्रूयुर्जहीति वा मारयेति वा संज्ञपयतानुगमयतेत्येवैतर्हि ह्येष देवाननुगच्छति तस्मादाहुरन्वगन्निति ॥ १२ ॥

अथ पुरा संज्ञपनाज्जुहोति स्वाहा देवेभ्य इत्यथ संज्ञप्ते देवेभ्यः स्वाहेति पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये तानेवैतदुभयान्प्रीणाति त एनमुभये देवाः प्रीताः सुधायां दधति ते एते परिपशव्ये इत्याहुती ते जुहुयाद्यदि कामयेत यद्यु कामयेतापि नैवाद्रियेत ॥ १३ ॥ ॥ इति प्रथमं ब्राह्मणम् ॥

### द्वितीयं ब्राह्मणम्

स वै यदैतदाहुः संज्ञप्तः पशुरित्यथाध्वर्युरुपोत्तिष्ठन्नाह नेष्टः पत्नीमुदानयेति स नेष्टा पत्नीमुदानयति तामुदानेष्यन्वाचयति नमस्त आतानेति यज्ञो वा आतानो यज्ञꣳ हि तन्वते जघनार्धो वा एष यज्ञस्य यत्पत्नी सेदं प्राची यज्ञं प्रसत्स्यन्ती[१] भवति तस्मा एवैतन्नमस्करोति तस्मै निह्नुते तथैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्त आतानेत्यनर्वा प्रेहीत्यसपत्नेन प्रेहीत्येवैतदाह घृतस्य कुल्या उप ऋतस्य पथ्या उपेति साधूपेत्येवैतदाह देवीरापः शुद्धा वोढ्वꣳ सुपरिविष्टा देवेषु । सुपरिविष्टा वयं परिवेष्टारो भूयास्मेत्यप एवैतत्पुनाति ॥ १ ॥

अथाद्भिः पशोः प्राणान्त्सꣳस्पर्शयति सा यदद्भिः पशोः प्राणान्त्सꣳस्पर्शयति जीवं वै देवानाꣳ हविरमृतममृतानां घ्नन्त्यु वा एतत्पशुं यदेनꣳ संज्ञपयन्त्यापो वै प्राणोऽन्नꣳ ह्यापोऽन्नꣳ हि प्राणस्तदस्मिन्नेतान्प्राणान्दधाति तदेनꣳ समीरयति तथा हात उदेति तथा संजीवति तथैतज्जीवं देवानाꣳ हविर्भवत्यमृतममृतानाम् ॥ २ ॥

६. हि M, My, T, W

७. विपृक्षेण My

८. तन्नाहु TE

१. प्रशस्यन्ती V 1 C, TE, M

12. Then they move by the north of *Āhavanīya*, turn right and sit 'lest they should be eye-witnesses to its being strangled (quieted). They do not slay on the frontal bone, for that is the human way (of doing it); nor behind the ear, for that is the procedure (adopted) by *Pitṛs*. They either choke it by merely keeping its mouth closed or they make a noose (and strangulate). That is the gods' way. They do not say 'slay it or kill it'. He would be doing it in the human way if he were to say 'slay it or kill it'. He should only say 'quiet it; let it go', for, it (*paśu*) is going to the gods. That is why (afterwards) they say 'it has gone'.

13. Before strangling, he offers (saying) "*Svāhā* to the gods". When it is strangled (he says) "To the gods, *Svāhā*". For in the case of some gods the *Svāhā* sound preceeds and in some others *Svāhā* sound follows". Both these (types of) gods he pleases. Being gratified, both these gods convey him to the heavenly world. These offerings are called *Paripaśavya* oblations. He may offer them if he chooses. If not he can ignore them. (First Brāhmaṇa Ends)

## BRĀHMAṆA II

1. When he (the slaughterer) announces "The *paśu* has been quieted", the Adhvaryu says, "Neṣṭṛ, lead up the lady". The Neṣṭṛ brings the wife (of the Yajamāna) and conducting her, he makes her say "Homage be to thee, O wide-stretched". The wide-stretched one, foresooth, is the sacrifice; because the sacrifice, indeed, widespreads. That wife is of course, the hind-part of the sacrifice and he wants her thus come forward praising the sacrifice. That is why she pays homage to it (the sacrifice) she bows before it. For that reason the sacrifice does not injure her. Therefore she says "Homage be to thee O wide-stretched", (she says), "Advance, unresisted". By that she says 'Advance thee unchallenged (by enemies)". Unto the rivers of *ghee*, along with the path of sacred truth" whereby she means to say towards good. "Ye divine pure waters, carry ye (the sacrifice) to the gods, well-prepared. May we who prepare (for the sacrifice) be rendered worthy preparers". Thereby (she) purifies the water.

2. Thereupon (she) cleanses with water, the (apertures for) the vital airs in the *paśu*. The reason why she thus cleanses with water the apertures of the vital airs is this: The food of the gods is like the nectar for the immortals. But in quieting (cutting up) that *paśu*, they kill it. Water is life-breath. Water is food. And the vital air (life-breath) is the food. By this (she) now puts into it those vital airs and thus it becomes thereby animated. Then, it rises up as it were and comes to life. Alive, it becomes the food (*havis*) of the gods, the nectar for the immortals.

सा यत्पत्नी योषा वै पत्नी योषाया वा इमाः प्रजाः प्रजायन्ते तदेनं योषायाः पत्न्या एतज्जनयति ॥ ३ ॥

सा वाचं ते शुन्धामीति मुखं प्राणं ते शुन्धामीति नासिके चक्षुस्ते शुन्धामीत्यक्षिणी श्रोत्रं ते शुन्धामीति कर्णौ मेढ्रं ते शुन्धामीति वा नाभिं ते शुन्धामीति वा योऽयं पुरस्तात्प्राणोऽथ पायुं ते शुन्धामीति योऽयं पश्चात्प्राण एतदस्मिन्नेतान्प्राणान्दधात्येतदेनꣳ समीरयति ॥ ४ ॥

अथ पदः सꣳहृत्य चरित्राꣳस्ते शुन्धामीति पद्भिर्वै प्रतितिष्ठति सा यदास्मिन्नेतान्प्राणान्दधाति यदेनꣳ समीरयत्यथैनं पद्भिः प्रतिष्ठापयति तस्मादाह चरित्राꣳस्ते शुन्धामीति ॥ ५ ॥

अथ याः परिशिष्टा आपो भवन्ति ताभिरध्वर्युश्च यजमानश्चानुषिञ्चतः प्राणाꣳश्चैवास्मिꣳस्तद्धत्तः समीरयतश्चैनं यदु चैवास्य संज्ञपयन्तः क्रूरीकुर्वन्ति यदास्थापयन्ति तदु चैवास्यैतदाप्याययतस्तच्छमयतो मेध्यमु चैवैनमेतत्कुरुतस्तस्मादनुषिञ्चतः ॥ ६ ॥

तावनुषिञ्चतो मनस्त आप्यायतां वाक्त आप्यायतां प्राणस्त आप्यायतां चक्षुस्त आप्यायताꣳ श्रोत्रं त आप्यायतामित्येतदस्मिन्नेतान्प्राणान्धत्त एतदेनꣳ समीरयतो यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्ते निष्ट्यायतामिति तद्यदस्य संज्ञपयन्तः क्रूरीकुर्वन्ति यदास्थापयन्ति तदेवास्यैतदाप्याययतस्तच्छमयतस्तत्ते शुध्यत्विति तदेनं मेध्यं कुरुतः ॥ ७ ॥

शमहोभ्य इति जघनार्धे निषिञ्चति क्रूरीव वा इदं कुर्वन्ति यत्पशुꣳ संज्ञपयन्ति नेदिदमन्वहोरात्राणि शोचानित्यापो वै शान्तिस्तदद्भिः शान्त्या शमयति तस्मादाह शमहोभ्य इति ॥ ८ ॥

अथोत्तानं पर्यस्यन्ति स इदं तृणमधि[2]निदधात्योषधे त्रायस्वेति वज्रो वा एष यच्छासस्तदेनमेतदोषधिभिरेवान्तर्दधाति तथैनमेष वज्रो न हिनस्ति स्वधिते मैनꣳ हिꣳसीरित्याच्छ्र्यति वज्रो वा एष यच्छासस्तथैनमेष वज्रो न हिनस्ति स यदेतया प्रज्ञातयाश्रियाच्छ्र्यत्येषा हि यजुष्कृता मेध्या भवति स यदिदमग्रं तृणस्य तत्सव्ये पाणौ कुरुते यद्बुध्नं तद्दक्षिणे स

२. तृणमभि Ca

3. That wife of the Yajamāna is a woman and from woman progeny is born here on earth. Thus he causes that (*paśu*) to be born from that woman.

4. She wipes its mouth (saying) "Thy speech, I cleanse"; the nostrils (saying) "I cleanse thy breath"; the eyes (saying) "Thy eye, I cleanse". The ears (saying), "Thine ear, I cleanse"; that opening of the vital air in front (saying), "Thy organ, I cleanse" or "Thy navel, I cleanse"; that opening of the vital air behind (saying), "Thy anus, I cleanse". Thus she puts into it those vital airs and revives it.

5. Thereupon, holding its legs together (wipes them) (saying) "Thy feet, I cleanse", because it is on the feet it stands firmly. She thus, putting vital airs into it and reviving it, makes it stand firmly on its feet. Therefore she says "Thy feet, I cleanse".

6. With the waters that are remaining (after her wiping) the Adhvaryu and the Yajamāna then sprinkle it and put the vital airs into it and revives it. Thus, wherever they cut it, wherever they wounded it while quieting it, that they sooth and heal it. Thereby they make it pure for the sacrifice. That is why they sprinkle it.

7. They (Adhvaryu and Yajamāna) sprinkle it (saying) "Let your mind be strengthened; let your speech be strengthened; let your life-breath be strengthened; let your eye be strengthened; let your ear be strengthened". Thus they infuse the vital airs into it. Thereby they revive it. "Whatever was wounded or crushed in you, let it be healed; let it be joined". Thereby whatever (parts) of it they wound or crush while quieting it; that they strengthen and that they heal. "Let that be purified". By saying so, they render it pure for sacrifice.

8. "Auspicious be the days" (so saying) they pour out (water) on its hind part. They are indeed tormenting it while strangling. Lest thereafter they grieve for days and nights, by the healing waters they calm it, since water is healer. Therefore they say "Auspicious be the days".

9. Thereupon they turn the *paśu* over on its back. He (Adhvaryu) puts on it this (other) straw (saying) "O Plant, protect". This knife foresooth, is a thunderbolt. He covers it by these grass. Thereby that thunderbolt does not injure him. (He says) "Injure it not, O blade" - for, this knife which is indeed a thunderbolt is (capable of) injuring. By this the thunderbolt does not injure him, since it cuts with its tamed edge which is (rendered harmless), treated with the chant and made pure for the sacrifice. The (cut) top of the grass, he holds by his left hand and the bottom

यथो[३] लोहितमुत्पतति तदुभयतोऽनक्ति रक्षसां भागोऽसीति रक्षसाꣳ ह्येष भागो यदसृक्स यदुभयतः परिच्छिन्नं भवत्युभयतः परिच्छिन्नानि हि रक्षाꣳस्यमूलान्युभयतः परिच्छिन्नान्यन्तरिक्षमनुचरन्ति तस्मादुभयतः परिच्छिन्नं भवति ॥ ९ ॥

तदुपास्याभितिष्ठतीदमहꣳ रक्षोऽभितिष्ठामीदमहꣳ रक्षोऽवबाधे। इदमहꣳ रक्षोऽधमं तमो नयामीति यज्ञो वै यजमानो यज्ञेनैवैतन्नाष्ट्रा रक्षाꣳस्यपबाधते[४] ॥ १० ॥

अथ वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णोति घृतेन द्यावापृथिवी प्रोर्ण्वाथामितीमे एवैतद्द्यावापृथिव्या ऊर्जा रसेन भाजयत्यनयोरेव द्यावापृथिव्योरूर्जꣳ रसं दधाति ॥ ११ ॥

स यत्कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतो यत्र ह वा अग्रे देवाः पशुमालेभिरे तस्य होदीचः कृष्यमाणस्यावाङ्मेधः पपात स एष वनस्पतिरजायत स यत्कृष्यमाणात्समभवत्तस्मात्कार्ष्मर्यो नाम तेनैवैनमेतन्मेधसा[५] समर्धयति कृत्स्नं करोति तस्मात्कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतः ॥ १२ ॥

परिवास्य वपां पशुश्रपणे प्रतपति श्रपयत्येवैनां तन्नेदशृतामाहवनीये श्रपयाणीत्यथोल्मुकमादाय पूर्वः प्रतिपद्यते तत्पुनरप्यर्जत्यथ यदिदमग्रं तृणस्य भवति तत्प्रास्यति वायोऽवेः स्तोकानामिति स्तोकानामेवैषा समित्स्तोकेभ्य एवैनमेतत्समिन्द्धे ॥ १३ ॥

अथोत्तरतो वपां प्रतपति श्रपयत्येवैनां तदथो अत्येष्यन्वा एतदग्निं पर्येष्यन्भवत्यग्नय एवैतन्निह्नुते तथैनमेषोऽग्निरतियन्तं न हिनस्ति ॥ १४ ॥

सोऽन्तराहवनीयं च यूपं च हरति स यदेतामनेन जघनेन न हरन्ति येनान्यानि हवीꣳषि शृतानि हरन्ति नेदनयाशृतया क्रूरीकृतया यज्ञं प्रसजानीति बहिर्धो ह[६] यज्ञात्स्याद्यदग्रेण यूपꣳ हरेयुस्तथा न बहिर्धा यज्ञाद्भवति तस्मादन्तराहवनीयं च यूपं च हरत्यथ दक्षिणार्धे श्रपयति ॥ १५ ॥

अथाभिजुहोति जुषाणोऽग्निराज्यस्य वेतु स्वाहेति तथा हैते शृताः स्वाहाकृता स्तोका अग्निं प्राप्नुवन्त्यथाह स्तोकेभ्योऽनुब्रूहीति स एता आग्नेयी स्तोकेभ्योऽन्वाह स यदाग्नीयी

३. यथा My, W, Pa, T
४. रक्षाꣳस्यवबाधते C, Ca
५. See notes
६. बहिर्धा यज्ञा Ca

part he holds by his right hand. When the blood gushes out, he smears it (the bottom part) in both ends (saying) "Thou art the Rakṣasa's share" for, that blood is indeed, the share of the Rakṣasas. If (the grass) happens to be cut on both ends, because the Rakṣasas, rootless and cut up on both sides are loitering in the aerial region. Therefore it is cut at both ends.

10. He throws (the grass) away and treads on it (saying) "Herewith, I tread down the Rakṣasas! Herewith, I drive away the Rakṣasas! Herewith, I consign the Rakṣasas to the regions of darkness". Thus it is by means of the sacrifice that he drives away the evil spirits, the Rakṣasas.

11. Therefore they pull out the *vapā* (omentum) and envelop the two roosters (saying) "May you envelop heaven and earth with *ghee*". Thereby he invests both of them, the heaven and earth, with strength and sap; he puts strength and sap into the heaven and earth.

12. The two roasters of *vapā* are made of *Kārṣmarya* wood, where the gods earlier immolated the *Paśu*. (At that time) when the *paśu* was being drawn upwards, its sacrificial essence flowed downwards and from that this tree sprang. Since it grew from that which was being drawn up (*kṛṣyamāṇa*), it is called *Kārṣmarya*. With that same essence, he now perfects it and makes it whole. Hence the roasters of *vapā* are of *Kārṣmarya* wood.

13. After cutting the *vapā* (omentum) off on all sides, he heats it at the cooking fire. He does cook it, otherwise it will be uncooked when offered in the *Āhavanīya* and (will amount to) get cooked there (and thus will not be an oblation). Then (the Agnīdh) takes a burning stick and goes in front and again puts it down. Then the tip of the grass (which he was holding all the while in the left hand), he throws it (into the *Āhavanīya*) (saying) "O Vāyu, graciously accept the drops" for this *samidha* is (kindled) by drops (of *ghee*) because it is with drops that it has been kindled.

14. Then at the northern end, he heats the *vapā*, for he is about to pass by the fire; and to roast (the *vapā*), after walking round to the south side. Hereby conceals it from Agni and thus, that fire does not injure it when taken past (the fire).

15. He takes it (*vapā*) between the *Āhavanīya* and the *yūpa*. The reason why they do not take it across the middle (of the altar), whereby they take other oblations, is lest they should bring the sacrifice in the middle into contact with this uncooked and bloody (*vapā*). If it is taken (by the route) with *yūpa* in the front, then it will not be outside the sacrifice (and at the same time it does not come into contact with the middle of the sacrifice). Therefore he takes it between the *Āhavanīya* and the *yūpa*. He cooks it at the southern side.

16. He sprinkles *ghee* (on the *vapā*) (Saying) "May the Agni accept the *ghee* with joy, *Svāhā*"! Thereby these heated drops (of *ghee*) offered with *Svāhā*, reach the Agni. Hence he says, "Recite to the drops". He recites to the drops, those chants addressed to Agni. Why he recites to the drops, chants meant for Agni is, that rain

स्तोकेभ्योऽन्वाहेत: प्रदाना वै वृष्टिरितो वा अग्निर्वृष्टिं वनुते स एतैस्तोकैरेतान्त्स्तोकान्वनुते त एते वर्षन्ति तस्मादाग्नेयी स्तोकेभ्योऽन्वाहाथ यदाह शृता प्रचरेति ॥ १६ ॥

अथ स्रुचावादायाश्राव्याह स्वाहाकृतिभ्य: प्रेष्येति वषट्कृते जुहोति स वपामेवाग्रेऽभिघारयत्यथ पृषदाज्यम् ॥ १७ ॥

तद्वा आहु: पृषदाज्यमेव पूर्वमभिघारयेदिति प्राण: पृषदाज्यमिति वपाꣳहाभिघारयन्तं याज्ञवल्क्यं ब्राह्मणोऽनुव्याजहारान्तरगादयमध्वर्यु: प्राणं प्राण एनꣳ हास्यतीति स ह स्माह स्थविरो जीर्णि: शयान इमौ पलितौ बाहू अभूतां स्विदेव ब्राह्मणस्य वचो बभूवेत्युत्तममु वै प्रयाजमिष्ट्वा ध्रुवामेवाग्रेऽभिघारयति तस्या हि प्रथमावाज्यभागौ यक्ष्यन्भवत्यथ यथापूर्वमन्यानि हवीꣳष्युत्तम उ वा एष प्रयाज एतामु वा अत्र प्रथमाꣳ होष्यन्भवति तस्माद्वपामेव पूर्वामभिघारयेदथ पृषदाज्यम् ॥ १८ ॥

स यद्वपामभिघारयति तदेवास्यापि पशुरभिघारितो भवत्यथ यत्प्रत्यक्षं पशुं नाभिघारयति नेदशृतमभिघारयाणीत्येतदेवाभिघारितो भवति यद्वपामभिघारयति ॥ १९ ॥

उपस्तृणीत आज्यमवदधाति हिरण्यशकलमवदधाति वपामवदधाति हिरण्यशकलमथ[७] द्विरभिघारयति स यदुभयतो हिरण्यशकला[८] करोति जीवं वै देवानाꣳ हविरमृतममृतानां घ्नन्त्यु वा एतत्पशुं यदेनमग्नौ जुह्वत्यायुर्वा अमृतꣳ हिरण्यमायुष्येवैनमेतदमृतेऽन्तत: प्रतिष्ठापयति तथा हात[९] उदेति तथा संजीवति तथैतज्जीवं देवानाꣳ हविर्भवत्यमृतममृतानाम् ॥ २० ॥

७. हिरण्यशल्कमथ V 1, My
८. शल्कौ M, V 1, My, P1, T
९. तथाहात TE, C

originates from gifts made here (on the earth), for, from here it is that Agni obtains rain. By means of these drops (*ghee* falling from the *vapā*) he obtains those (rain) drops which rain. Therefore he recites to the drops, chants addressed to Agni.

17-18. As to this some say (alternatively) that the clotted *ghee* has to be first sprinkled (with *ghee*) (and then only the *vapā*), arguing that the clotted *ghee* is the breath. One priest cursed Yājñyavalkya who was first sprinkling *ghee* on the *vapā* (saying) "This Adhvaryu has shut out the breath, the life-breath shall depart from him". He (Yājñyavalkya) said, when (he become) old, weak and lying down (after continuously doing the other way for his whole life). "These hands of mine have become gray (by sprinkling the *vapā* first) and what has become to that priests words (of curse)". "After the last *Prayāja* offering, one sprinkles *ghee* first into the *Dhrūva* (which contains the clotted *ghee*). For, the foremost shares of *ghee* are for it (clotted *ghee*), since in that fore-offering it is in that order for other types or *havis*. This *Prayāja* (in the after-offering) is the last. Here this (*vapā*) is the first to be offered. Therefore the *vapā* itself should be first sprinkled and then the clotted *ghee*.

19. By sprinkling *ghee* on the *vapā*, the *paśu* as well gets sprinkled. Why he does not directly sprinkle on the *paśu* is lest he should sprinkle on the uncooked. So the *paśu* itself gets sprinkled with *ghee* when he sprinkles on the *vapā*.

20. Thereupon, he makes a layer of *ghee* (in the *juhū*) and places a piece of gold thereon. He then places the *vapā* and then a (second) piece of gold on it. The reason why there is a piece of gold on both sides is this. That which is alive becomes oblations to the gods; it is the nectar of the immortals. This *paśu*, they slay before offering it in the fire. Life is ambrosia, gold is life. So (by placing gold pieces) he bestows life into it and ultimately set it up firmly in immortality. That is why it rises up as it were from hence and so it comes to life. Being a live (animal) it becomes the oblation to the gods; nectar to the immortals.

अथाहाग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहीत्याश्राव्याहाग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्येति न प्रस्थितमित्याह प्रसुते प्रस्थितमित्याह वषट्कृते जुहोति स यद्वपां जुहोति यस्या एव देवतायै हविर्भवत्येष पशुस्तामेव देवतामेतेन मेधसा[10] प्रीणाति मेधो ह्येतद्यन्मेदः सैतेन मेधसा प्रीतोत्तरः हविरुपरमते श्रप्यमाणमथ समीच्यौ वपाश्रपण्यौ कृत्वोत्तरतोऽनुप्रास्यति स्वाहाकृते[11] ऊर्ध्वनभसं मारुतं गच्छतमिति याभ्यां वपामशिश्रपाम[12] नेत्त्ये[13] अमुयेवासत इत्यथ चात्वाले मार्जयन्ते क्रूरीव वा इदं कुर्वन्ति यत्पशुः संज्ञपयन्ति यद्विशासत्यापो वै शान्तिस्तदद्भिः शान्त्या शमयति तस्माच्चात्वाले मार्जयन्ते ॥ २१ ॥

॥ इति द्वितीयं ब्राह्मणम् ॥

### तृतीयं ब्राह्मणम्

स वै यद्देवत्य एवैष पशुर्भवति तद्देवत्यं पुरोळाशमनुनिर्वपति स यत्तद्देवत्यं पुरोळाशमनुनिर्वपति सर्वेषां वा एष पशूनां मेधो यद्व्रीहियवौ तेनैवैनमेतन्मेधसा समर्धयति कृत्स्नं करोति स यद्वपया प्रचर्याथैतेन प्रचरन्ति मध्यतो वै वपामुत्खिदन्ति मध्यत एवैनमेतेन मेधसा समर्धयति मध्यतोऽस्मिन्नेतन्मेधो दधाति तस्माद्वपया प्रचर्याथैतेन प्रचरन्त्यथैतं पशुं विशास्ति[1] ॥ १ ॥

तमाह त्रिः प्रच्यावयतादित्युत्तमे प्रच्याव[2] उत्तमार्धे हृदयं कुरुतादिति त्रिवृद्धि यज्ञस्तस्मादाह त्रिः प्रच्यावयतादित्यथ यदाह शृतः प्रचरेति ॥ २ ॥

अथ शमितारं विशासति यत्त्वा पृच्छाच्छृतः हविः शमिता३ इति शृतमित्येव ब्रवसि मा शृतः हीति मा शृतः[3] भगव इति शृतमित्येव ब्रवसीति ॥ ३ ॥

१०. See notes at IV. 8.2.12
११. See notes
१२. श्रपायु V 1 (corrected as श्रपाम in C)
१३. See notes

१. See notes
२. See notes
३. शृतः हि भगव Ca

21. He calls for *Śrauṣaṭ* and says "Prompt (the Hotṛ to recite the offering chant on) the *vapā* and fat of the he-goat for Agni and Soma". He orders to send the *vapā* and fat of the goat for Agni and Soma and he does not say "That is brought forward". As he says in the case of the pressed Soma (which is also a *havis*). He offers (*vapā* and fat) when *vaṣa* has been pronounced. Why he offers *vapā* is this. For whatever deity the *paśu* is seized, that same deity, he places by means of that fat. Fat is here a sacrificial oblation. He being pleased by this oblation, waits patiently for the other types of *havis* that are being cooked. He lays the two *vapā* roasters, throws them together afterwards (after the offering of *vapā*) (saying) "Consecrated by *Svāhā*, go ye to *Ūrdhvanabhas* (the Vāyu who drives the clouds up in the sky), the son of the Maruts". Thinking "Lest these two wherewith we have cooked the *vapā* should come to nought". They then cleanse themselves over the *Cātvāla* pit. For, in quieting up (the *paśu*) they wound it, and water being a healing (soothing) agent, they heal it by means of water. Therefore they cleanse themselves over the *Cātvāla* pit. (Second Brāhmaṇa Ends)

## BRĀHMAṆA III

1. For the same deity for which there is a *paśu*, he subsequently prepares a *puroḍāśa* (cake). The reason why he subsequently prepares a *puroḍāśa* for that same deity is this—rice and barley, truly are the sacrificial essence of all *paśus*; with the same essence, he now completes that (*paśu*) and makes it whole. Why he proceeds with that *puroḍāśa* after offering the *vapā* is this. It is from the middle part (of the *paśu's* body) that this *vapā* is pulled out and at that middle part he now completes it by means of that sacrificial essence: because he puts this essence in the middle part (i.e. on the *vapā*). Therefore he proceeds with the *puroḍāśa* after offering the *vapā*.

2. He tells (the slaughterer) "Divide into three parts. Make the heart the uppermost". The sacrifice is indeed, threefold and so he says "Divide into three parts". Then he says "Go ahead; cook".

3. He then instructs the *Śamitṛ* (slaughterer) If one asks you "Is the *havis* cooked" you only say 'cooked' and not 'cooked of course' nor 'cooked, revered Sir'. only say 'cooked'.

अथ पृषदाज्यस्योपहत्योपनिष्क्रम्य पृच्छति शृतꣳ हविः शमिता३ इति शृतमिति शमिता प्रत्याह तद्देवानामित्याहोपाꣳशु स यदेवं पृच्छति शृतं वै देवानाꣳ हविर्नाशृतꣳ शमितो वा एतद्वेद यथैतच्छृतं[4] भवति शृतेन प्रचराणीति तथा यद्यप्यशृतं भवति शृतमेव देवेभ्यो भवति शृतं यजमानायानेना अध्वर्युः शमितर्येव[5] तदेनोऽथ यदुपाꣳश्वाह तद्देवानामिति तद्धि देवानां यच्छृतं नाशृतं तस्मादुपाꣳश्वाह तद्देवानामिति स वै त्रिः पृच्छति त्रिवृद्धि यज्ञः ॥ ४ ॥

अथ पृषदाज्येन हृदयमभिघारयत्यात्मा वै मनोहृदयं प्राणः पृषदाज्यमात्मन्येवैतन्मनसि प्राणं दधाति तथा हात उदेति तथा संजीवति तथैतज्जीवं[6] देवानाꣳ हविर्भवत्यमृतममृतानाम् ॥ ५ ॥

सोऽभिघारयति सं ते मनो मनसा सं प्राणः प्राणेन गच्छतामिति न स्वाहाकरोति न ह्येषाहुतिः स येनैव पशुं नयन्ति तेन पुनराहरन्ति तमन्तराहवनीयं च यूपं च हरति स यदेतꣳ शृतꣳ सन्तमनेन जघनेन न हरन्ति येनान्यानि हवीꣳषि शृतानि हरन्ति नेदनेनाङ्गशो विकृत्तेन क्रूरीकृतेन यज्ञं प्रसजानीति बहिर्धो ह यज्ञात्स्याद्यदग्रेण यूपꣳ हरेयुस्तथा न बहिर्धा यज्ञाद्भवति तस्मादन्तराहवनीयं च यूपं च हरति ॥ ६ ॥

अथ दक्षिणार्धेऽवद्यति तत्प्लक्षशाखोत्तरबर्हिर्भवति स यत्प्लक्षशाखोत्तरबर्हिर्भवति यत्र ह वा अग्रे देवाः पशुमालेभिरे तद्धैनं त्वष्टा शिरस्तोऽभिववामोतैनमित्थं चिन्नालभेरन्निति त्वाष्ट्रा[7] हि पशवस्तदेतत्त्वष्टुरभिवान्तं यन्मस्तिष्को यदनूके मज्जा तस्मादेतद्वान्तमिव भवति तस्मादेतस्य नाश्नीयात्त्वष्टुर्ह्येतदभिवान्तं तस्याभिवान्तस्य पशोरवाङ्मेधः पपात स एष वनस्पतिरजायत तं देवाः प्रापश्यꣳस्तस्मात्प्रक्षो नाम प्रक्षो ह वै नामैतद्यत्प्लक्ष इत्याहु-स्तेनैवैनमेतन्मेधसा समर्धयति कृत्स्नं करोति तस्मात्प्लक्षशाखोत्तरबर्हिर्भवति ॥ ७ ॥

उपस्तृणीत आज्यं जुह्वां चोपभृति चावदधाति हिरण्यशल्का उपस्तृणीत आज्यं वसाहोमहवन्यां च समवत्तधान्यां च ॥ ८ ॥

४. यदैतच्छृतं Ca
५. शमितर्ह्येव TE
६. तथैवैतज्जीवं C
७. त्वष्टा Ca

4. (When it is cooked) he steps up with clotted *ghee* stuffed (in the *juhū*) and asks "Is the *havis* cooked, O Śamitṛ". The Śamitṛ replies 'cooked'. "That is for the gods" says the Adhvaryu in a low voice. The reason why he asks is this. Cooked forsooth, not uncooked must be the gods' food; and the Śamitṛ indeed knows whether it is cooked or uncooked. He asks that (thinking) "Let me perform with cooked *havis*". Now, if that *havis* is uncooked (and the Śamitṛ has misled him) it is yet cooked food for the gods and cooked it is (so far as) the Yajamāna is concerned. The Adhvaryu also is free from sin (for taking it for cooked). That sin befalls only on the Śamitṛ (the slaughterer). Now, why he says in a low voice 'That is of the gods' is that the cooked *havis* is for the gods and not the uncooked. So he says in a low voice. "That is of the gods". Thrice he asks; for three-fold is the sacrifice.

5. The heart, he soakes with clotted *ghee*, for, the heart is the self; the mind and the clotted *ghee* is the breath. He thus puts breath into its (*paśu's*) self, into its mind. That is why it rises up and it gets enlivened and becomes the live food of the gods; the nectar of the immortals.

6. He pours *ghee* (on it) (saying) "May thy mind unite with the mind; thy breath with the breath". He does not utter *Svāhā*. This is not an oblation. He brings that (cooked *paśu*) by the same route by which the *paśu* was taken (to be slaughtered). He brings it between the *Āhavanīya* and the *yūpa*. He does not take this cooked *havis* through the back side of the altar by which other cooked oblations are brought lest this which has been cut limb by limb and mangled come into contact with the middle of the sacrifice. If it is taken by the outside of the altar in front of the *yūpa*, it would get excluded from the sacrifice. (To see) that it does not get excluded from the sacrifice, they bring it between the *Āhavanīya* and the *yūpa*.

7. He (The Pratiprasthātā) cuts it at the south side (of the fire). There are branches of the *Plakṣa* (tree) forming the upper *barhis* (enclosure). The *Plakṣa* branches form the upper enclosure (whereon he cuts) because when the gods, at first, seized a *paśu* (for sacrifice), Tvaṣṭṛ spat on its head, thinking "Surely, thus they will not use it for sacrifice (since polluted by spitting)". For, the animals are (of) Tvaṣṭṛ and that spittle of Tvaṣṭṛ is the brain in the head and the marrow in the neck-bone (of the animal). Hence that substance is like the vomit. Hence it should not be eaten, because, it is indeed the spittle of Tvaṣṭṛ. Of the *paśu*, which was spat upon by Tvaṣṭṛ, the essence flowed down and this tree grew (out) of it. The gods observed it, wherefore it (was) *prakṣa* (observed) and *prakṣa* it was that came to be called *Plakṣa*. With that same essence (of the *paśu* spat on by Tvaṣṭṛ, which oozed down and gave rise to the tree), he now completes it and makes it a whole. Therefore the *Plakṣa* branches form the upper enclosure.

8. He then makes a layer of *ghee* both in the *juhū* and the *upabhṛt* and puts a gold piece in each of them. He puts *ghee* in the ladle used for offering *vapā* and the *samavatta* (the vessel having the cuttings of *Iḍā*).

अथाह मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति स यन्मनोताया अनुवाच आह सर्वा वै देवताः पशुमालभ्यमानमुपसङ्गच्छन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति सर्वासाꣳ ह्येतद्देवतानाꣳ हविर्यत्पशुस्तासाꣳ सर्वासां देवतानां पशौ मनाꣳस्योतानि भवन्ति तान्येवैतत्प्रीणाति तथो तान्यमोघायोपसंगच्छन्ते तस्मान्मनोताया अनुवाच आह ॥ ९ ॥

स वै हृदयस्याग्रेऽवद्यति स यन्मध्यं सतोऽथ हृदयस्याग्रेऽवद्यति प्राणो वै हृदयमेतस्माद्ध्ययमूर्ध्वः प्राण उच्चरति प्राण[८] उ वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावदेव पशुरथ यदा प्राणोऽपक्रामत्यनर्थ्य एव दारुभूतः शेते स एष पशुर्यद्धृदयं तत्प्रत्यक्षमेवैतत्पशोरवद्यति तथा यद्यप्यवदानं जहात्यहीनमेवास्य तद्भवति तस्माद्धृदयस्याग्रेऽवद्यत्यथ यथापूर्वमवद्यति ॥ १० ॥

अथ जिह्वाया अवद्यति सा हीयं पूर्वार्धे प्रतिष्ठत्यथ[९] वक्षसस्तद्धि ततोऽन्वगथ दोष्णोऽथ पार्श्वयोरथ वृक्कयोरथ तनिम्नोऽथैतं गुदं त्रेधा करोति तद्यत्स्थविम तदुपयड्भ्य उपनिदधत्यथ यन्मध्यं तज्जुह्वां द्वेधा कृत्वावदधात्यथ यदणिम तत्त्र्यङ्गेष्वथाध्यूधसः श्रोणेरेतावज्जुह्वामवद्यत्यथोपभृति त्र्यङ्गयस्य दोष्ण एतद्गुदस्य तृतीयं द्वेधा कृत्वा त्र्यङ्ग्यायाः श्रोणेरेतावदुपभृत्यथ हिरण्यशल्कावववदायाभिघारयति[१०] ॥ ११ ॥

अथ वसाहोमं गृह्णीते रेळसीति लेलयमिव हि यूस्तस्मादाह रेळसीत्यग्रिष्ट्वा श्रीणात्वित्यग्निर्ह्येतच्छ्रीणात्यापस्त्वा समरिणन्नित्यापो ह्येतꣳ सर्वेभ्योऽङ्गेभ्यो रसꣳ संभरन्ति[११] तस्मादाहापस्त्वा समरिणन्निति वातस्य त्वा ध्राज्यै पूष्णो रꣳह्या इत्यन्तरिक्षाय वा एतद्गृह्णात्यन्तरिक्षमन्वयं पवते योऽयं पवत एतस्मा उ हि गृह्णाति तस्मादाह वातस्य त्वा ध्राज्या इति पूष्णो रꣳह्या इत्येष वाव पूषा योऽयं पवत एतस्मा उ हि गृह्णाति तस्मादाह पूष्णो रꣳह्या इत्यूष्मणी व्यथिषदित्येष वा ऊष्मा योऽयं पवत एतस्मा उ हि गृह्णाति तस्मादाहोष्मणो व्यथिषदिति ॥ १२ ॥

८. उच्चरति उ वै TE

९. See notes

१०. शल्कावववधाय Ca

११. संभरति TE

**9.** Thereupon, he addresses (the Hotṛ) to recite on the *havis* that is being cut for the Manotā deity (that Agni who is called Manotā by virtue of his being addressed as *Manotṛ* in the particular hymn). Why he refers to Manotā is that all the deities move towards the *paśu* while it is immolated, thinking "My name he will choose; my name, he will choose", for, the *paśu* is no doubt, the sacrificial food for all gods. So the minds of all the gods are (*ota*) pinned upon that *paśu*. Those minds of gods are satisfied and they have not flocked near it in vain. Therefore he asks to recite for Manotā.

**10.** He first cuts the tip of the heart; that is since it is in the middle, he cuts the tip of the heart. The heart is the breath, since it is from there (heart) that this breath moves upwards and the animal is breath, for only so long does the *paśu* (live) as it breaths with the breath. When the breath departs, it lies there worthless, even as a log of wood. The heart then is the *paśu*. And this (heart) of the *paśu*, he gets cut before his very eyes. (Later) Even if (any portion) he misses in cutting, it does not cause any deficiency. That is why he cuts at the tip of the heart. Therefore (he cuts) according to the proper order.

**11.** Then he cuts the tongue, for that stands out from its fore-part. Then the breast, for, that comes after that (tongue). Then the lower parts of the fore-feet; then the flanks; then the kidneys and then the livers. Then he cuts the hind part into three; the broad piece, he keeps for the fore-offerings; the middle part he cuts and puts into the *juhū* after subdividing it into two pieces; the smaller one for the *tryaṅga* (to be offered in *Sviṣṭakṛt* oblation). Then the hip above the udder. This much he stuffs the *juhū* with. Then into the *upabhṛt* (ladle of that name) he puts the upper part of the fore-feet belonging to the *tryaṅga*; the one-third of the *tryaṅga* after dividing it into two and the haunch set apart for *tryaṅga*. This much he stuffs into the *upabhṛt*. Thereupon he places two pieces of gold and sprinkles *ghee*.

**12.** He then takes the oblation of *vaśā* (the melted fat mixed with the water used for cooking the limbs) (saying) "Thou art trembling". For, quivering as it were, is the broth; hence he says "Thou art trembling". "May Agni prepare thee" for the fire does, indeed cook it. "The waters have washed thee together" for the water indeed gathers together that fat from the limbs; hence he says 'the waters have washed thee together'. "For the sweeping of the wind-thee; for the speed of Pūṣan". By saying "For the sweeping of the wind-thee" (he means) that he takes it to the aerial region because the wind that blows yonder, blows towards the aerial region. For that (wind), he takes it. Hence he says, "For the sweeping wind-thee". (By saying) "For the speed of Pūṣan" (he means) Pūṣan's speed, forsooth, is yonder (wind) and for that he takes it. Hence he says "For the speed of Pūṣan". "From the hot vapour tottering". The hot vapour, namely, yonder (wind) and for that he takes it. Hence he says "From the hot vapour tottering".

अथ द्विरभिघार्य शासेन वा पार्श्वेन वा प्रयौति प्रयुतं द्वेष इति नाष्ट्रा एवैतद्रक्षाꣳस्यपहन्ति ॥ १३ ॥

अथ समवत्तधान्यां यूरासिच्य तदवदधाति जिह्वाꣳहृदयं वक्षस्तनिम मतस्ने वनिष्ठुमथ द्विरभिघारयति स यदुभयतो[१२] हिरण्यशल्कौ करोति जीवं वै देवानाꣳ हविरमृतममृतानां ध्नन्त्यु वा एतत्पशुं यदेनमग्नौ जुह्वत्यायुर्वा अमृतꣳ हिरण्यमायुष्येवैनमेतदमृतेऽन्ततः प्रतिष्ठापयति तथाहात उदेति तथा संजीवति तथैतज्जीवं देवानाꣳ हविर्भवत्यमृतममृतानाम् ॥ १४ ॥

अथ यदक्ष्णयावद्यति सव्यस्य च दोष्णो दक्षिणायाश्च श्रोणेर्दक्षिणस्य च दोष्णः सव्यायाश्च श्रोणेस्तस्मादयमक्ष्णया पशुः पदः प्रहरति यद्ध सम्यगवद्येत्सम्यगेव पशुः पदः प्रहरेदथ यन्न शिरसो नाꣳसयोर्नानूकस्य नापरसक्थिनोरवद्यति[१३] ॥ १५ ॥

असुरा ह वा अग्रे पशुमालेभिरे तद्देवा भीषा नोपावेयुः सो हेयमदितिरुवाचेयं वै पृथिव्यदितिर्मा यूयमेतदादृद्वमित्यहमेवैतस्याध्यक्षा भविष्यामि यथा यथैतं एतेन चरिष्यन्तीति तेन ह यदा चेरुरथ होवाचान्यतरामाहुतिमहौषुरित्यन्यतरां पर्यशिषन्निति तद्यां पर्यशिषꣳस्तानीमान्यवदानानि येषामेतदवद्यति तत एतद्देवाः स्विष्टकृते त्र्यङ्गा न्यपाभजꣳस्तस्मात्तेषामुपभृत्यवद्यति ॥ १६ ॥

अथ हासुराः शिरसोꣳसयोरनूकस्यापरसक्थिनोरित्यवाद्यꣳस्तस्मात्तेषां नावद्यत्यवत्तꣳ हि तेषां यातयामानि हि तान्यथ यद्वेव त्वष्टानूकमभ्यवमीत्तस्मादनूकस्य नावद्यति[१४] ॥ १७ ॥

अथाहाग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहीत्याश्राव्याहाग्नीषोमाभ्यां छागस्य हविः प्रेष्येति न प्रस्थितमित्याह प्रसुते प्रस्थितमित्याह ॥ १८ ॥

सोऽर्धर्चे वसाहोमं जुहोति स यदर्धर्चे वसाहोमं जुहोतीतो वा अयमूर्ध्व उच्छ्रितो रसोऽयमिदमिमाः प्रजा उपजीवन्त्यर्वाग्दिवोऽस्मिन्नन्तरिक्षे रसो वै वसाहोमस्तमेतꣳ रसमेतेन रसेन तीव्रीकरोत्येतस्मिन्रस एतꣳ रसं दधाति तस्मादयꣳ रसोऽद्यमानः पीयमानो न क्षीयते ॥ १९ ॥

१२. यद्युभयतो Ca
१३. See notes
१४. See notes

13. Thereupon, after sprinkling *ghee* twice, he mixes it either with the chopping knife or with the crooked knife (saying) "The enemies are finished". Thereby he destroys the terrible Rakṣasas.

14. Into the *Samavattadhānī*, he empties the broth and therein he puts the tongue, the heart, the breast, the broad piece (of the hind part), the kidneys and the rectum. Then he sprinkles *ghee* twice. Why he puts gold pieces on either side is because the live one is the *havis* for the gods; the nectar for the immortals. They kill the *paśu* which is offered into the fire. Life is nectar. Gold is nectar. He thereby ultimately establishes it firmly in life; in immortality. That is why it (*paśu*) rises up as it were; revived to life. This live one becomes the *havis* for the gods; the nectar for the immortals.

15. And because he cuts crossways - of the left fore-foot and the right haunch and of the right fore-foot and the left haunch. Therefore this *paśu* kicks forward its feet crossways. But were he to cut straight on, this *paśu* would draw forward its feet (of the same side) simultaneously; therefore he cuts crossways. Then as to why he does not make cuttings of the head, nor the shoulders, nor the neck nor the hind-thighs.

16. Now the Asuras, once seized a *paśu*. The gods, out of fear, did not go near it. Then this Aditi said; Aditi is this earth. "Head Ye not this; I will myself be an eye-witness thereof, in whatsoever manner they will perform this (offering)". So when they performed, she said "Only one oblation have they offered, the other they have left over" Now that which they have left over are these same portions. Which are now being cut. Thereupon the gods made over three limbs to Agni (*Sviṣṭakṛt*) and so they are cut into the *upabhṛt*.

17. The Asuras then made portions of the head, the shoulders, the neck and the hind-thighs. Therefore he does not make portions of these. They are purified (polluted) since Tvaṣṭṛ spat upon the neck. Therefore the neck is not cut.

18. Thereupon he says (to Hotṛ) "Recite (the invitatory chants) to Agni and Soma for the *havis* of the Gods" - Having called for the *Śrauṣaṭ*, he says (to the Maitrā-Varuṇa) "Prompt (the Hotṛ) to recite for the *havis* of the he-goat to Agni and Soma". He does not say "the *havis* made ready". He did say "Made ready" in the case of Soma.

19. After chanting half the offering formula, he offers the *vapā*. Why he offers *vapā* when half the chant is uttered - it is from out of this that essence has risen upwards here by which those creatures sustain themselves on this side of the sky, in the aerial region. For, the oblation of *vasā* is the essence. That sap, he renders strong by means of this essence and hence this essence when eaten or drunk does not perish.

अथ यद्वेवार्धर्चे जुहोत्यर्धं वा इयं याज्याया अर्धमसौ द्यौरन्तरो वै द्यावापृथिव्यावन्तरिक्षमन्तरिक्षाय वा एतज्जुहोति तस्मादुभावर्धर्चावन्तरेण जुहोति ॥ २० ॥

स जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबत। अन्तरिक्षस्य हविरसि स्वाहेत्येतेन वैश्वदेवेन यजुषा वैश्वदेवꣳ हीदमन्तरिक्षं यदेनमिमाः प्रजा या इमाः प्राणन्ति चोदनन्ति च ता अनुचरन्ति[१५] तेन वैश्वदेवे वषट्कृते यज्जुह्वां भवति तज्जुहोति ॥ २१ ॥

अथ पृषदाज्यस्योपहत्याह वनस्पतयेऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति वषट्कृते जुहोत्येतम्वेवैतद्वज्रं यूपं भागिनं करोत्येष हि वनस्पतिरेतम्वेवैतत्पशुꣳ सोमं करोति सोमो हि वनस्पतिः स यदुभे आहुती अन्तरेणैतद्यजति तेन होभे व्याप्नोति तेनोभे सोमो भवति तस्मादुभे आहुती अन्तरेणैतद्यजति ॥ २२ ॥

पर्यस्यमान आह यदुपभृति भवत्यग्नये स्विष्टकृतेऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति वषट्कृते जुहोत्यथ यदिदं परिशिष्टं वसाहोमस्य भवति तेन दिशो व्याघारयति दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहेति पञ्च दिशो रसो वै वसाहोमः सर्वास्वेवैतद्दिक्षु रसं दधाति तस्मादयं दिशि दिश्येव रसोऽभिगम्यते ॥ २३ ॥

अथ पशुꣳ संमृशत्येषैव संमर्शनस्य वेळा यदि तु मन्येतेमेविमथिष्यन्ते य इमेऽभितस्तिष्ठन्तीत्यपि पुरैव संमृशेदेषा त्वेव वेळा ॥ २४ ॥

स संमृशत्यैन्द्रः प्राणोऽङ्गेऽङ्गे निधीतः ऐन्द्र उदानोऽङ्गेऽङ्गे निदीध इति तद्यदङ्गशो विकृत्तः[१६] क्रूरीकृतो भवति तदेनमेतत्प्राणोदानाभ्यामेव सन्दधाति तदेनꣳ समीरयति देव त्वष्टर्भूरि ते सꣳसमेतु सलक्ष्मा यद्विषुरूपं भवातीति कृत्स्नवृतमेवैनमेतत्सꣳस्करोति देवत्राऽयंतमवसे[१७] सखायोऽनु त्वा मातापितरो मदन्त्विति कृत्स्नवृतमेवैनमेतत्सꣳस्कृत्य यत्रैतदग्नावहौषीत्तत्सर्वमनुसमस्यति तथास्यैष कृत्स्न एव सर्वतनूरमुष्मिँल्लोके पशुः संभवति ॥ २५ ॥॥ इति तृतीयं ब्राह्मणम् ॥

१५. अनुसंचरन्ति C, Ca

१६. विकृतं TE

१७. देवत्रा यन्तमवसे Ca

20. And now, as to why he offers when half the chant is uttered - one half-chant forsooth, is this earth which is the sacrificial ground and the other half-chant is yonder-sky. Now between this earth and the sky is the aerial region and it is to that aerial region, he offers. Therefore he offers in the interval between the utterance of the two half-chants.

21. He offers (saying). "Drink the *ghee*, you drinker of *ghee*! Drink the *vasa*, you drinker of *vasā*. Thou art the *havis* of the aerial region, *Svāhā*". With this prayer to the All gods (*Viśvedevas*), he offers. For, the air-space belongs to the *Viśvedevas*, since creatures breath in and breath out while moving about here and therefore it is of all gods. As the *Vaṣat* is pronounced, he offers the oblation which is in the *juhū*.

22. Thereupon, while taking clotted *ghee*, he says (to Hotṛ) "Recite to the lord of the forest and offers as the *Vaṣaṭ* is pronounced". He thereby makes that thunderbolt, the *yūpa*, a sharer (in the sacrifice). The lord of the forest is himself made to be the *paśu*, Soma. And as to his offering (to the tree) in between the two oblations, he thereby fills both completely. They both thereby become Soma. So he offers it between the two offerings.

23. Then while what is remaining in the *upabhṛt*; he says (to the Hotṛ) "Recite to Agni, the *Sviṣṭakṛt* (the one who makes the offerings well-offered)". Having called for the *Śrauṣaṭ*, he says (to the Maitrā-Varuṇa) "Prompt for Agni, the *Sviṣṭakṛt*" and offers as the *Vaṣat* is pronounced. With what is left over of the *vasā* offering, he then sprinkles the quarters (saying) "The regions—the fore-regions—the by-regions. The intermediate regions the upper regions to the regions, *Svāhā*"! Thus for the five quarters. For the offering of *vasā* is sap. Thus he imbues all the regions with sap, and hence sap is available in each region and this earth.

24. Then he touches (what remains of) the *paśu*. This is the time for touching it. And whether he has already touched it, fearing 'Those evil spirits that hover near will tear it about", or whether he be not afraid of its being torn about, let him in any case now touch (the *paśu*).

25. He touches it (saying) "To Indra belongeth the out-breathing; may it be infused in every limb. To Indra, belongeth the in-breathing, may it get infused in every limb". When it has been cut up limb by limb, and when it has been wounded, he heals it only by the *Prāṇa* and *Udāna* (in-breathing and out-breathing). Then it is made up. "O', divine Tvaṣṭṛ, let thine multiple forms closely unite together; that it be uniform, what is of multilated shape". Thereby he makes it fashioned and completely well-set. "May thy friends, thy father and mother, rejoice over your-going to the gods". Thus having made him completely set-up and fashioned, he puts together all those (parts) which are offered in the fire. Thus in full unmultilated form, it becomes *paśu* in Yonder world. (By these chants, he restores all its mutilated parts of the body and shape it into a full-fledged *paśu* in the other world). (Third Brāhmaṇa Ends)

चतुर्थं ब्राह्मणम्

त्रीणि ह वै पशावेकादशान्येकादश प्रयाजा एकादशानुयाजा एकादशोपयज एतावान्हि पशुर्दशेमाः पाण्या अङ्गुलयो दशामूः पाद्या दशेमे प्राणाः प्राण उदानो व्यान एतमु वा अनु सर्वे पशवस्तस्मादेतानि त्रीणि पशावेकादशानि ॥ १ ॥

तदाहुः किं तद्यज्ञे क्रियत इति यस्मात्सर्वेभ्योऽङ्गेभ्यः शिवः प्राण इति गुदो वै प्राणः स ह्ययं प्राङततस्तं प्राणोऽनु संचरति सयदेतं त्रेधा करोति तृतीयं जुह्वां तृतीयमुपभृति तृतीयमुपयद्भ्यस्तस्मात्सर्वेभ्योऽङ्गेभ्यः शिवः प्राणः ॥ २ ॥

तदाहुः स वै पशुमालभेतेति य एनं मेध उपनयेदिति स यदि कृशः स्याद्यत्रैवादो वपामुत्खिदन्ति तद्यदध्युदर्यम्मेदः परिशिष्टꣳ स्यात्तद्गुदे संमृशेद्गुदो[१] वै प्राणः स ह्ययं प्राङततस्तं प्राणोऽनुसंचरति प्राण उ वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावदेव पशुरथ यदा प्राणोऽपक्रामत्यनर्थ्य एव दारुभूतः शेते स एष पशुर्यद्गुदो मेध[२] उ वै मेधस्तदेनं मेध उपनयत्येवं कुर्याद्यदि कृशः स्याद्यद्युवꣳसलः स्यान्नैतदाद्रियेत स्वयꣳ ह्येव स मेध उपेतो भवति ॥ ३ ॥

अथपृषदाज्यं गृह्णीते स यत्पृषदाज्यं गृह्णीते मिथुनमेवैतत्प्रजननं क्रियते यदाज्यं च भवति दधि च द्वे वैते भवतो द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते ॥ ४ ॥

तेनानुयाजेषु प्रचरन्ति पशवो वा अनुयाजाः पयः पृषदाज्यं पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं[३] प्राण उ वै पृषदाज्यमन्नꣳ हि पृषदाज्यमन्नꣳ हि प्राणस्तदिमं पुरस्तात्प्राणं दधात्यथ यत्पश्चाद्गुदेनोपयजति गुदो वै प्राणः स ह्ययं प्राङततस्तं प्राणोऽनुसंचरति तदिदं पश्चात्प्राणं दधाति ताविमा उभयतः प्राणौ हितौ[४] यश्चायमुपरिष्टाद्यश्चाधस्तात्स वा

१. समृषेद्गुदो Ca, समृशेद्गुदो M
२. मेद Ca
३. हि तं TE
४. हि तौ TE, P1, Pa

BRĀHMAṆA IV

1. Now there are three elevens at the *paśu*-sacrifice eleven fore-offerings (*prayājās*); eleven after-offerings (*anu-yājās*) and eleven by-offerings (*upayājās*). This much is the *paśu*-sacrifice. Ten fingers, ten toes and ten vital airs and three breaths - out breathing (*Prāṇa*), in-breathing (*Udāna*) and through-breathing (*vyāna*) - That is the constitution of all animals. These three (tens plus one of the breaths) is the *paśu* sacrifice.

2. Now they argue "What then is done at the sacrifice since the vital air is friendly to all the limbs". The hind part being (the seat of) the vital air and that *paśu's* body extending from thence forwards, that vital air pervades all through. In that *paśu*-sacrifice, he cuts the hind part into three one-third, he puts into the *juhū*, one-third into the *upabhṛt* and one-third (keeps) for the by-offerings. So the vital air exists friendly to all the limbs.

3. They say - "He alone, however, may slay an animal who can supply it with the sacrificial essence. And if it be lean, let him stuff into the hind-part whatever is left of the fat of the belly from where they pull out the *Vapā*. The hind-part being (a seat of) the vital air, and that (animal) extending from thence forward, that vital air pervades it all through. The *paśu*, forsooth, is breath, for only so long the *paśu* lives, as it breaths, with the breath. But when the breath departs from it, it lies worthless like a block of wood. The hind-part is (part of) the animal and fat means sacrificial essence. Thus he supplies it with the sacrificial essence. Thus he should do (replenish the hind-part with fat from the body) if it (*paśu*) is lean. If it is young and fleshy, he need not care to do this. Because it is having this sacrificial essence.

4. Thereupon he takes clotted *ghee*. By taking the clotted *ghee*, he makes a productive pair because it is *ghee* and sour milk. They two form a pair. Where there is a pair, there is productivity. So he creates a productive union.

5. Therewith they perform the *Anuyājās* (after offerings). The *Anuyājās* mean cattle and clotted *ghee* stands for milk. So he thereby puts milk into the cows and thus milk is here contained in the cattle. Clotted *ghee* means life-breaths; because clotted *ghee* is food and life-breath is food. Thereby he puts into (the *paśu*) that vital air which is here in front (in the form of clotted *ghee*). He (Pratiprasthātā) performs the by-offering behind (the altar). The hind portion is (seat of) vital air. The hind part stretches behind and the vital air pervades it all through. By this he puts vital air at the hind portion. Thus two vital airs are here contained from both sides. The one above and the one below. Here now, one (Hotṛ) pronounces the *Vaṣaṭ* for two—one for (the Adhvaryu) him, who offers the after-offering and the one for (the Pratiprasthātā) him, who offers the by-offering. Because he (Pratiprasthātā) offers in addition to what he (Adhvaryu) offers, it is called *Upayāja* (by-offering). And in performing the by-offering, he produces (offspring), since he performs the

एष एको होता द्वाभ्यां वषट्करोति यश्चायं प्रचरति यश्चोपयजति स यद्यजन्तमुपयजति तस्मादुपयाजो[५] नाम स यदुपयजति प्रैवैनं तज्जनयति तस्माज्जघनार्ध उपयजति जघनार्धाद्धि योषितः प्रजाः प्रजायन्ते ॥ ५ ॥

स उपयजति समुद्रं गच्छ स्वाहेति रेतो वै समुद्र आपो हि समुद्र आपो हि रेतो रेत एवैतत्सिञ्चति ॥ ६ ॥

देवꣳ सवितारं गच्छ स्वाहेति सविता वै देवानां प्रसविता सवितृप्रसूत एवैतत्प्रजनयति ॥ ७ ॥

अन्तरिक्षं गच्छ स्वाहेत्यन्तरिक्षं वा अन्विमाः प्रजाः प्रजायन्तेऽन्तरिक्षमेवैतदन्विमाः प्रजाः प्रजनयति ॥ ८ ॥

मित्रावरुणौ गच्छ स्वाहेति प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवैतदासु प्रजासु दधाति ताविमौ प्राणोदानावासु प्रजासु हितौ ॥ ९ ॥

अहोरात्रे गच्छ स्वाहेत्यहोरात्रे वा अन्विमाः प्रजाः प्रजायन्तेऽहोरात्रे एवैतदन्विमाः प्रजाः प्रजनयति ॥ १० ॥

छन्दाꣳसि गच्छ स्वाहेति सप्त वै छन्दाꣳसि सप्त वै ग्राम्याः पशवः सप्तारण्या-स्तानेवैतदुभयान्प्रजनयति ॥ ११ ॥

द्यावापृथिवी गच्छ स्वाहेत्येता एवैतत्प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां परिजग्राह ता इमाः प्रजा आभ्यां द्यावापृथिवीभ्यां परिगृहीतास्तद्यदेतावदेवा भविष्यद्यावत्यो हैवाग्रे प्रजाः सृष्टास्तावत्य एवाभविष्यन्न प्राजनिष्यत प्रत्येव जनयति ॥ १२ ॥

सोमं गच्छ स्वाहेति रेतो वै सोमो रेत एवैतत्सिञ्चति ॥ १३ ॥

यज्ञं गच्छ स्वाहेति रेतो वै यज्ञो रेत एवैतत्सिञ्चति ॥ १४ ॥

नभो दिव्यं गच्छ स्वाहेति रेतो वै नभो दिव्यमापो हि नभो दिव्यमापो हि[६] रेतो रेत एवैतत्सिञ्चति ॥ १५ ॥

५. उपयजो Ca

६. दिव्यमापो रेतो V 1, W, Pa

*Upayājas* behind the altar. It is indeed from the hind part, offspring is born of woman.

6. He offers the by-offering (saying) "Go throw to the ocean! *Svāhā!*". The ocean is water and semen is water; he thereby casts the seed.

7. "Go thou to the divine Savitṛ, *Svāhā!*" Savitṛ is the impeller of the gods and impelled by Savitṛ, he thus procreates.

8. "Go thou to the aerial region, *Svāhā!*" It is into the aerial region the offspring is borne and he produces these offsprings in the aerial region.

9. "Go thou to Mitrā and Varuṇa, *Svāhā!*" Mitrā and Varuṇa are the *Prāṇa* (out-breathing) and *Udāna* (in-breathing); he thus bestows the *Prāṇa* and the *Udāna* into the creatures.

10. "Go thou to the day and the night, *Svāhā!*" It is in the course of day and night that these creatures are borne. So he causes creatures to be borne in the course of day and night.

11. "Go thou to the metres, *Svāhā!*" There are seven metres and there are seven domestic and seven wild animals. Both kinds, he thus causes to be produced.

12. "Go thou to the heaven and the earth, *Svāhā!*" For Prajāpati having created the living beings, enclosed them between heaven and earth. So these creatures are enclosed between heaven and earth. There would only be as many living beings as were created in the beginning; they would not have (propogated) multiplied, if he had not (further) procreated (by these by-offerings). Creatures are again born (repeatedly - because of the by offerings).

13. "Go thou to Soma, *Svāhā!*" Sacrifice is the semen he thus casts seed.

14. "Go thou to the sacrifice, *Svāhā.*" Sacrifice is the semen and thus he pours semen.

15. "Go thou to the heavenly ether, *Svāhā.*" The heavenly ether is water and water is seed and thus he castes seed.

अग्निं वैश्वानरं गच्छ स्वाहेतीयं वै पृथिव्यग्निरिमामेवैतत्प्रतिष्ठामभीमाः प्रजाः प्रजनयति ता इमाः प्रजा इमां प्रतिष्ठामभि प्रजायन्ते स यदेतत्पुनः प्रजनयति तस्माद्धिमाः प्रजाः पुनरभ्याकारं प्रजायन्तेऽथ मुखं विमृष्टे मनो मे हार्द्यच्छेति[७] तथो आत्मानं न प्रवृणक्ति ॥ १६ ॥

अथ जाघन्या पत्नीः संयाजयन्ति योषा वै पत्नी जघनार्धाद्वै[८] योषितः प्रजाः प्रजायन्ते तस्माज्जाघन्या पत्नीः संयाजयन्ति सोऽन्तरतो देवानां पत्नीभ्योऽवद्यत्यन्तरतो हि योषितः प्रजाः प्रजायन्त उपरिष्टादग्नये गृहपतये वृषा वा अग्निरुपरिष्टाद्वै योषां वृषाधिद्रवति तस्मादुपरिष्टादग्नये गृहपतये ॥ १७ ॥

अथ हृदयशूलेनावभृथं यन्त्येतद्वै पशोरालभ्यमानस्य हृदयꣳ शुक्समवैति सा हृदयाच्छूलꣳस येनैव श्रपयति स हृदयशूलोऽथालंजुषꣳ शृतमेव परितृन्दन्ति तस्माच्छ्रपयेत[९] एव ब्रूयात्स न परास्यो यद्धैनं परास्येदोषधीश्च ह वनस्पतीꣳश्च शुक्प्रविशेद्यदु[१०] हैनमप्सु परास्येदपो ह शुक्प्रविशेदवभृथमेवैनेनेयात्स यद्यहान्तिकमुदकꣳ स्यात्तदेवेयाद्यद्यु तस्मै ग्लायेद्बहिर्वेद्युदपात्रं निनीय तदार्द्रस्य च शुष्कस्य च संधा उपगूहति मापो मौषधीर्हिꣳसीरिति तथा नापो नौषधीर्हिनस्ति धाम्नो धाम्नो राजꣳस्ततो वरुण नो मुञ्च । यदाहुरघ्न्या इति वरुणेति शपामह इति सर्वस्मान्नः किल्बिषादेनसो वरुण्यात्प्रमुञ्चेत्येवैतदाह तथा सर्वस्मात्किल्बिषादेनसो वरुण्यात्प्रमुच्यते ॥ १८ ॥

अथाप उपस्पृशन्ति सुमित्रिया न आप ओषधयः सन्त्वित्येतस्माद्वै भीषा यावदेतेन प्रचरन्ति तावदापश्चौषधयश्चापक्रामन्ति ताभिरेवैतत्पुनर्मित्रधेयं कुरुते ता एनं पुनः प्रविशन्ति ता आत्मनि कुरुते तस्मादाह सुमित्रिया न आप ओषधयः सन्त्विति स वा एष नाग्नीषोमीयस्य पशोः क्रियते नाग्नेयस्य वशाया एव क्रियते सꣳस्थाꣳ ह्येषोऽनुक्रियते तद्वेवापीतरयोः कृतो भवति ॥ १९ ॥ ॥ इति चतुर्थं ब्राह्मणम् ॥

॥ अष्टमोऽध्यायः समाप्तः ॥

७. See notes

८. जघनार्धाद्धि Ca's suggestion

९. तस्माच्छ्रपयितव एव Ca, तस्माच्छ्रपयतिव एव C,
तवा एव suggested as correction by Ca

१०. प्रविशेद्यद्यु Ca

अथ यद्वेवैतꣳ सावित्रं ग्रहं गृह्णात्यृतवो वै संवत्सरो यज्ञस्तानदः प्रत्यक्षं प्रातःसवनेऽवकल्पयति यदृतुग्रहान् गृह्णात्यथ परोक्ष माध्यन्दिने सवनेऽवक्लृप्यन्ते यदृतु-पात्राभ्यां मरुत्वतीयान्गृह्णात्यथात्र नर्तुग्रहान्गृह्णाति नर्तुपात्राभ्यां कंचन ग्रहं गृह्णाति ॥२॥

एष वै सविता य एष तपत्येष उ वै सर्व ऋतव एतेनो ह तृतीयसवन ऋतवः संवत्सरोऽवक्लृप्यन्ते तस्माद्वा एतꣳ सावित्रं ग्रहं गृह्णाति ॥३॥

तदुपाꣳपात्रेण गृह्णीयात्प्राणो हि सविता प्राणो ह्युपाꣳशुरथो अन्तर्यामपात्रेण समानꣳ हि तद्यदुपाꣳश्वन्तर्यामौ तस्मादुपाꣳशु पात्रेण वैनं गृह्णात्यन्तर्यामपात्रेण वा ॥४॥

आग्रयणाद्गृह्णाति मनो वै सवितात्माग्रयण आत्मन्येवैतन्मनो दधाति प्राणो वै सवितात्माग्रयण आत्मन्येवैतत्प्राणं दधाति ॥५॥

स गृह्णाति वाममद्य सवित र्वाममु श्वो दिवे दिवे वाममस्मभ्यꣳ सावीः। वामस्य हि क्षयस्य देव भूरेरया धियावामभाजः स्याम॥ उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनो मयि धेहि जिन्व यज्ञं जिन्व यज्ञपतिमिति ॥६॥

तं न सादयति मनो वै सविता तस्माद्विदमसन्नं मनः सञ्चरति प्राणो वै सविता तस्माद्वयमसन्नः प्राणः सञ्चरत्याश्राव्याह देवाय सवित्रे प्रेष्येति वषट्कृते जुहोति ॥७॥

नानुयजति मनो वै सविता नेदग्नौ मनः प्रवृणजानीति प्राणो वै सविता नेदग्नौ प्राणं प्रवृणजानीति तेन तथैवाभक्षितेनैतं वैश्वदेवं ग्रहं गृह्णाति स यदभक्षितेन वैश्वदेवं ग्रहं गृह्णाति न वै सावित्रस्यानुवषट्करोति स एतेन वैश्वदेवेनानुवट्कृतो भवति तस्मादभक्षितेन गृह्णाति ॥८॥

अथ यद्वेवाभक्षितेन गृह्णाति मनो वै सविता सर्वं विश्वे देवाः सर्वमेवैतन्मने[२] सोऽनुवर्त्म करोति तदिदꣳ सर्वं मनसोऽनुवर्त्म प्राणो वै सविता सर्वं विश्वे देवाः सर्वस्मिन्नेवैतदस्मिन्प्राणं दधाति सोऽयमस्मिन्त्सर्वस्मिन् प्राणो हितस्तस्मादभक्षितेन गृह्णाति ॥९॥

अथ यद्वेवैतं वैश्वदेवं ग्रहं गृह्णाति वैश्वदेवं वा एतत्सवनं यत्तृतीयसवनं तदुच्यते सामतो यथा वैश्वदेवं तथर्क्तोऽथैतेनैव ग्रहेण यजुष्टः पुरश्चरणतस्तस्माद्वा एतं महावैश्वदेवं ग्रहं गृह्णाति ॥१०॥

२. तन्मनोऽनुवर्त्म V 1

2. As to his drawing this *Sāvitra graha*—the seasons constitute the year, the sacrifice. They are directly attended to in the morning *savana*, when he draws the *grahas* for seasons. At the midday *savana*, he covertly attends to them (seasons), because it is from the *Ṛtu grahas* he draws the *Marutvatiyas*. Here (in the third *savana*), he neither draws the *Ṛtu grahas* nor any other *graha* is drawn from the *Ṛtupatras* (vessels of the seasons).

3. Savitṛ, forsooth, is the yonder one that burns (the Sun) and he indeed, is all the seasons. By this (*Sāvitra graha*) it is that the seasons, the year are attended to in the third *savana*. Therefore also he draws the *Sāvitra graha*.

4. It should be drawn with the *Upāṁśu*. Or (he may draw) with the *Antaryāma* vessel, because both *Upāṁśu* and *Antaryāma* are one and the same. So he may draw it either with *Upāṁśu* vessel or with *Antaryāma* vessel.

5. He draws it from the *Āgrayaṇa graha*, for, *Savitṛ* is his mind and *Āgrayaṇa* is his body. So he puts this mind into the body. *Savitṛ* is *prāṇa* (life-breath) and *Āgrayaṇa* is his body. So he puts this *prāṇa* into the body.

6. He draws (saying) "Bring thou forth boons for us this day, O Savitṛ, boons tomorrow, boons day by day. O God, through this our prayer, may we be sharers of boons of a good and plenteous abode. Thou art taken with a support. Thou art of Savitṛ, the joy-giver; give me joy; enthuse the sacrifice, enthuse the Yajamāna".

7. He does not deposit it (the *Sāvitra graha*) for, *Savitṛ* is the mind. So this mind restlessly goes about. The *Savitṛ* is *prāṇa*. Therefore this *prāṇa* restlessly goes about. He then says (to Maitrā-Varuṇa) "Recite (the invitatory prayer) to the god Savitṛ". When *Vaṣaṭ* is pronounced, he offers.

8. There is no secondary oblation. For, *Savitṛ* is mind and lest he should consign his mind to the fire (he does not do the secondary oblation). *Savitṛ* is life-breath and lest he should consign his *prāṇa* to the fire (he does not do the secondary oblation). Then with the same vessel, undrunk, he draws this *Vaiśvadeva graha*. As to why he draws the *Vaiśvadeva graha* with that undrunk vessel is because he does not do the secondary *Vaṣaṭkāra* and by this *Vaiśvadeva graha*, it becomes one for which secondary *Vaṣaṭkāra* is uttered. So he draws with undrunk (vessel)

9. Again why he draws with an undrunk vessel—*Savitṛ* is the mind. *Viśvedevas* are the All. All these he makes subordinate to mind. All these are subordinate to the mind. *Savitṛ* is *prāṇa* and *Viśvedevas* are the All. Into all these here, he puts *prāṇa*. So this *prāṇa* is deposited (or becomes beneficial) in everything here. So he draws with the undrunk vessel.

10. As to why he draws the *Vaiśvadeva graha*—This *savana* which is the third, belongs to the *Viśvedevas*. In the third *savana*, the (*śāstras*) are from *Sāman*, the gods (addressed) are from the *Ṛks* and those by way of preparatory rites are from the *Yajus*. That is why he draws the *Mahāvaiśvadeva graha*.

पूतभृतो गृह्णाति वैश्वदेवो हि पूतभृदतो हि देवेभ्य उन्नन्त्यतः पितृभ्योऽतो मनुष्येभ्यस्तस्मात्पूतभृतो गृह्णाति ॥११॥

तं वा अपुरोरुक्कं गृह्णाति सर्वं वा एतद्विश्वे देवा यदृचो यद्यजूꣳषि यत्सामानि स एतेन सर्वेण पुरोरुङ्मान्भवति तस्मादपुरोरुक्कं गृह्णाति ॥१२॥

स गृह्णात्युपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठान इति प्राणो वा एष ग्रहस्तस्मादाह सुशर्मासि सुप्रतिष्ठान इति बृहदुक्षाय नम इति प्रजापतिर्वै बृहदुक्षः प्रजापतय एवैनं नमस्करोति विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति सादयित्वा प्राङ्ङुपविशत्यभ्याह्वयति शꣳसति स यत्र शꣳसत्येकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशती च तिसृभिश्च वहसे त्रिꣳशता च नियुद्भिर्वाय इह ता विमुञ्चेत्येतस्यां वायव्यायामृचि पात्राणि विमुञ्चति स यदेतस्यां वायव्यायामृचि पात्राणि विमुञ्चति वायुर्वै पशूनामीष्टे वायुप्रणेत्रा हि पशवः प्राणो हि वायुः प्राणेन हीमे पशवश्चरन्ति सह पशुभिर्देवेभ्योऽध्यपचक्राम ॥१३॥

तं देवाः प्रातःसवन उपमन्त्रयांचक्रिरे स ह नोपाववर्त तं माध्यन्दिने सवन उपमन्त्रयांचक्रिरे स ह नैवोपाववर्त तं तृतीयसवन उपमन्त्रयांचक्रिरे ॥१४॥

स होवाचोपावर्त्स्यन् किं[३] ततो मम भविष्यतीति यद्युष्मानुपावर्त्स्यामीति ते होचुस्त्वयैव पात्राणि युज्यान्तै त्वया विमुच्यान्ता इति यदैन्द्रवायवं ग्रहं गृह्णाति तदेनेन पात्राणि युज्यन्तेऽथ यदेतस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते तदेनेन विमुच्यन्ते स यत्राह नियुद्भिर्वाय[४] इह ता विमुञ्चेति पशवो वै नियुतः पशुभिरित्येवैतदाह ॥१५॥

स यद्ध प्रातःसवन उपावर्त्स्यद्गायत्रं वै प्रातःसवनं गायत्रमग्नेश्छन्दो ब्रह्म वा अग्निर्ब्राह्मणेषु हैव पशवोऽभविष्यन्नथ यद्ध माध्यन्दिने सवन उपावर्त्स्यदैन्द्रं वै माध्यन्दिनꣳ

३. हि TE

४. वायविह C, M, H, My and Taittirīya; वाय इह in Kāṇva Saṁhitā

**11.** He draws it from the *pūtabhṛt* for the *pūtabhṛt* belongs to *Viśvedevas*, because therefrom they draw (*soma*) for the gods, for the *Pitṛs* and for men. Therefore he draws it from the *pūtabhṛt*.

**12.** He draws it without a *Puroruk* (*mantras* preceding *Upayāma Gṛhītosi*); for, he draws it for *Viśvedevas* and *Viśvedevas* are everything (all-inclusive), the *Ṛk*, the *Yajus* and the *Saman*. With all these, that *graha* becomes one having *Puroruk*. Therefore he draws it without a *Puroruk*.

**13.** He draws (saying) "Thou art taken with a support; thou art well-gaurded, well-established. Homage to the great bull". The great bull is Prajāpati. So pays homage to Prajāpati. "Thee to the *Viśvedevas*.(All-gods). This is thy womb—thee to the *Viśvedevas*". (Thus saying) he deposits it. After depositing it, he sits facing the east (in the *sadas*). He calls for the Hotṛ (to praise). The Hotṛ praises. Whereupon he praises "With one and ten for thine own sake, with two and twenty for the offering; with three and thirty for carrying up (the sacrifice to the gods); with they team, O Vāyu, do thou here release them"—during the recitation of this prayer to Vāyu, the drinking vessels are released. As to why he releases the vessels on the chanting of this *Ṛk* to Vāyu—the beasts have Vāyu as their leader; the beasts move about due to Vāyu. He (Vāyu) once went away from the gods along with the beasts.

**14.** The gods invited him (Vāyu) at the morning *savana*. He did not return. They invited him at the midday *savana*; he again did not return. They invited him at the third *savana*.

**15.** He (Vāyu) said "By returning, what will I gain, so that I may return to you". They (gods) said "By thee these vessels would be yoked and by thee they would be released". When he draws the *Aindra-vāyava graha*, these vessels are yoked by him (Vāyu) and here now on (the chanting) of the prayer to Vāyu, if the vessels are released, they are released by him (Vāyu). As to why he said 'with thy teams, O Vāyu, do thou, here release them'—teams means cattle and he only says '(release) by means of cattle'.

**16.** Now, had he (Vāyu) returned at the morning *savana*, the morning *savana* being one belonging to Gāyatrī and Gāyatrī being the metre of Agni and Agni being the Brāhmaṇa (priesthood), the cattle would have come to be with Brāhmaṇas only. Had he returned at the midday *savana*, the midday *savana* being one belonging to Indra, Indra being Kṣatra (nobility) the cattle would have come

सवनं क्षत्रमु वा इन्द्रः क्षत्रियेषु हैव पशवोऽभविष्यन्नथ यत्तृतीयसवन उपावर्तत वैश्वदेवं वै तृतीयसवनꣳ सर्वमु वै विश्वे देवास्तस्माद्विमे सर्वत्रैव पशव उपतिष्ठन्ते ॥१६॥ इति तृतीयं ब्राह्मणम् ॥

### अथ चतुर्थं ब्राह्मणम्

स वा एतेन सौम्येन चरुणा प्रचरति स यदेतेन सौम्येन चरुणा प्रचरति सोमो वै देवानाꣳ हविरथैतत्सोमाय हविष्करोति तथातोऽनिर्भक्तः सोमो भवति स यच्चरुर्भवत्यन्नं वै सोम एतद्वै प्रत्यक्षमन्नं यच्चरुरोदनो ह्येष ओदनो हि प्रत्यक्षमन्नं तस्माच्चरुर्भवति ॥१॥

तेन तृतीयसवने प्रचरन्ति पितृदेवत्यो वै सोम एते वै निष्केवल्ये देवानाꣳ सवने यत्प्रातःसवनं च माध्यन्दिनं च सवनꣳ स यद्धैनेन प्रातःसवने वा प्रचरेयुर्माध्यन्दिने वा सवने समदꣳह कुर्याद्देवेभ्यश्च पितृभ्यश्चाथैतन्मिश्रं यत्तृतीयसवनं तथा समृद्धवति तस्मादेनेन तृतीयसवने प्रचरन्ति ॥२॥

तस्य सानुवाक्यामन्वाह सकृद्ध्येव पराञ्चः पितरः स चतुर्गृहीतमाज्यं गृहीत्वाश्राव्याह घृतस्य यजेति वषट्कृते जुहोति तद्वा अतः प्राचीराहुतीर्जुहोति ताभ्योऽन्तर्दधाति तथासमद्भवत्यथैतेन सौम्येन चरुणा प्रचरत्यथापरं चतुर्गृहीतमाज्यं गृहीत्वाश्राव्याह घृतस्य यजेति वषट्कृते जुहोति तद्वा अत ऊर्ध्वा आहुतीर्होष्यन्भवति ताभ्योऽन्तर्दधाति तथा समद्भवत्येवमुभयतो घृतस्य परियजति ॥३॥

तद्वा आहुरन्यतरत एव परियजेत्पुरस्तादेवेत्यथ प्रचरणीति स्रुग्भवति तस्यां चतुर्गृहीतमाज्यं गृहीत्वा शालाकैर्धिष्ण्यान्व्याघारयति स यच्छालाकैर्धिष्ण्यान् व्याघारयति यदेवैनानदो देवा अब्रुवꣳस्तृतीयसवन एव वो घृत्याहुतिः प्राप्स्यति न सौम्यापहतो हि युष्मत्सोमपीथ इति सैनानेषा तृतीयसवने घृत्याहुतिः प्राप्नोति न सौम्यापहतो ह्येतेभ्यः सोमपीथस्तान्यैरेव यजुर्भिरुपकिरति तैरेव व्याघारयति यथापूर्वꣳ स्वाहाकारम् ॥४॥

to be with the Kṣatriyas. Since he (Vāyu) returned at the third *savana*, the third *savana* being one that belongs to *Viśvedevas, Viśvedevas* being everything (all encompassing), these cattle come to stay everywhere (in all castes). (Third Brāhmaṇa Ends)

## BRĀHMAṆA IV

1. He proceeds with (the offering of) the *cāru* (rice-pap) for Soma. As to why he proceeds with the *cāru* to Soma is this—*soma* is the *havis* (food) for the gods and here he prepares *havis* for that Soma (himself). Thereby, Soma is not left unfed since that *cāru* is *havis* for Soma. It is evidently the food, since *cāru* is cooked rice. Cooked rice is direct food. Therefore it is a rice-pap.

2. Therefore they proceed with this (*Saumya cāru*) in the third *savana*, for Soma has *Pitṛs* as his deity. The other two *savanas*, are exclusively for gods; the morning *savana* and the midday *savana*. If he were to proceed with this (*Saumya cāru*) in the morning *savana* or the midday *savana*, he will cause discord between gods and *Pitṛs*. Since the third *savana* is mixed one, there is no conflict. Therefore they proceed (with the *Saumya cāru*) in the third *savana*.

3. He recites no invitatory prayer (in offering *Saumya cāru*) for, the Pitṛs have passed away once for all. Having taken four ladlings of *ghee* and having called (on the Agnīdh), or the *Śrauṣat*, he says "Recite the offering chant of the *ghee*" and then offers as the *Vaṣaṭ* is uttered. Whatever oblations have been offered prior to this, therefrom he separates this one (to Soma) and thus he avoids any conflict (between the gods and *Pitṛs*). Again he continues (after the offering of *cāru*). Another four ladle full of *ghee* he takes and having called for the *Śrauṣaṭ*, he says "Recite the offering chant of the *ghee*". Whatever offerings he makes after that, therefrom he separates this one (to Soma) and thereby avoids any conflict (between gods and *Pitṛs*). Thus he offers *ghee* either time (once before and once after the offering of *cāru*).

4. Some say that the *ghee* offering should be only once; that is before (the *cāru*). There is a *sruk* called *Pracaraṇī*. Having taken four ladlings of *ghee* in that (*Pracaraṇī*), (the Adhvaryu) sprinkles (*ghee*) on the *Dhiṣṇya* hearths by means of *śalākas* (brushes made of grass). Now why he sprinkles on the *Dhiṣṇya* hearths with *śalākas* is this—Once the gods told (the Gandharvas, the guardians of Soma)—"At the third *savana*, you should receive only an offering of *ghee*; but not *soma* offering; because the *soma*—draught has been taken from you, wherefore you are not worthy of a *soma*-offering". Therefore that *ghee* offering reaches them in the third *savana* since they do not deserve *soma*-offering, since *soma*-draught has been taken away from them. With those same *Yajus* formulas with which they were thrown up, with the same ones he sprinkles them with *ghee*. The uttering of *Svāhā* too as before.

तदाहुस्तूष्णीमुत्तममाग्नीध्र आघारयेदित्युदग्नः[1] कर्मानुसन्तिष्ठाता इति तदु पराङेवाघारयेन्मार्जालीयमेवान्तमः स यावदेष एतच्छालाकैर्धिष्ण्यान्व्याघारयति तावत्प्रतिप्रस्थातैतं पात्नीवतं ग्रहं गृह्णाति स यदेतं पात्नीवतं ग्रहं गृह्णाति यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना अन्ततो यज्ञस्य मिथुनात्प्रजायन्ते तदेतदन्ततो यज्ञस्य मिथुनं प्रजननं क्रियते तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते ॥५॥

स यदि सावित्रमुपांशुपात्रेण गृह्णीयादन्तर्यामपात्रेणैतं यदि तमन्तर्याम-पात्रेणोपांशुपात्रेणैतं समानंहि तद्यदुपांश्वन्तर्यामौ प्राणोदानौ ह्येतौ प्राण उ ह्येवैष योषा वै पत्नी वृषा प्राणो मिथुनमेवैतत्प्रजननं क्रियते तस्मादुपांशुपात्रेण वैनं गृह्णात्यन्तर्यामपात्रेण वा ॥६॥

तं वा अपुरोरुक्कं गृह्णाति वीर्यं वै पुरोरुङ्नेत्स्त्रीषु[2] वीर्यं दधानीति तस्मादपुरोरुक्कं गृह्णाति ॥७॥

स गृह्णात्युपयामगृहीतोऽसि बृहस्पति सुतस्य ते देव सोमेति ब्रह्म प्रसूतस्येत्येवैतदाह यदाह बृहस्पतिसुतस्य ते देवसोमेतीन्द इन्द्रियावत इति वीर्यवत इत्येवैतदाह यदाहेन्द इन्द्रियावत इति पत्नीवतो ग्रहां(३) ऋध्यासमिति न प्रत्यक्षं पत्नीभ्यो गृह्णाति नेत्स्त्रीषु वीर्यं दधानीति तस्मान्न प्रत्यक्षं पत्नीभ्यो गृह्णाति ॥८॥

अथ यः प्रचरण्यांसंस्रवः परिशिष्टो भवति तेनैनं श्रीणाति यान्वा अन्यान्ग्रहाञ्छ्रीणाति समर्धयति वै तानथैतं व्यर्धयति वज्र आज्यं तद्वज्रेणाज्येनैतद्देवा अघ्नन्नेव स्त्रीर्निराक्ष्णुवंस्ता हता निरष्टा न दायस्य च नैशत नात्मनश्च नैशत तथो वा एष एतेन वज्रेणाज्येन हन्त्येव स्त्रीर्निरक्ष्णोति ता हता निरष्टा न दायस्य च नेशते नात्मनश्च नेशते तस्मादेतेन संस्रवेण श्रीणाति ॥९॥

१. उदग्रः TE
२. पुरोरुक्रेत्स्त्रीषु C, Pa

**5.** Some say "the final sprinkling should be on the Āgnīdhra hearth, for, in the north shall this sacred work of ours be accomplished". (No); the sprinkling (of Āgnīdhra hearth) should be earlier and the final (sprinkling) shall be only at *Mārjālīya* hearth. While he thus sprinkles (the hearths); with *śalakas*, Pratiprasthātā draws the *Pātnīvata graha*. The creatures are born from sacrifice. Those that originate from sacrifice are born of productive pair. Those born of productive pairs finally originate from the productive union of sacrifice. Thus ultimately, the productive union of sacrifice is made the (point) of origin. Therefore from the productive nature of the union of sacrifice, ultimately, these creatures are born. Therefore from the pair that is the source of production which is ultimately the sacrifice, these creatures are born.

**6.** If he draws the *Sāvitra graha* with the *Upāṁśu* vessel, this (*Pātnīvata graha*) should be drawn with the *Antaryāma graha* and if he draws the *Sāvitra* with the *Antaryāma graha*, this (*Pātnīvata*) should be from the *Upāṁśu graha*. These two are the same; the *Upāṁśu* and *Antaryāma*. They are the *prāṇa* and *udāna*, forsooth.

**7.** He draws it without chanting a *Puroruk*. Because the *Puroruk* is indeed Manliness-lest he should bestow manliness on women—therefore he draws it without a *Puroruk*.

**8.** He draws it (saying) "Thou art taken with a support; of thee, divine Soma, begotten by Bṛhaspati". (By this) he only says 'born of Bṛhaspati'. When he says 'Begotten by Bṛhaspati O divine Soma, 'Soma, thee the one with verility'—'of the powerful' is what he means when he says "Soma thee the one with verility". "May I prosper the draughts of thee, the one with the mate". Thereby he does not directly draw it for the wives. Lest he should bestow manliness on women, he does not directly draw it for the wives.

**9.** What (*ghee*) is left over, smeared on the *pracaraṇī* (spoon), he (Adhvaryu) mixes it. When he mixes the other libations he augments them, but in this case, he diminishes (reduces its potency). For, *ghee* is a thunderbolt. By that thunderbolt i.e. *ghee*, the gods struck the wives and impoverished them. They (the wives) thus struck and impoverished, became ineligible for a share in the paternal property and ceased to have right over their own bodies (ceased to be independent). And in like manner does he now by that thunderbolt, the *ghee*, smites the wives and impoverish them. Thus struck and improverished, they have no right over heritage nor are owners of themselves. That is why he (now) mixes with the residual *ghee* (of the *pracaraṇī*).

स श्रीणात्यहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पितास अहꣳ सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यदिति स यदहमहमिति श्रीणाति पुꣳस्वे[३]वैतद्वीर्यं दधाति तदिदं पुꣳसु[४] वीर्यꣳ हितमाश्राव्याहाग्नीत्पात्नीवतस्य यजेत्यग्निर्वा एष निदानेन यदग्नीद्योषा वै पत्नी वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियते तस्मादग्नीत्पात्नीवतस्य यजेति ॥१०॥

स जुहोत्यग्ने वाक्पत्नीति योषा वै पत्नी वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियते सजूर्देवेन त्वष्ट्रेति त्वष्टा वै रेतःसिक्तं विकरोति तदेतद्रेतःसिक्तं तत्त्वष्टा विकरोति सोमं पिब स्वाहेति वषट्कृत उत्तरार्धे जुहोति या वा अन्या आहुतीर्जुहोति ते देवा अथैताः पत्न्य एवꣳ हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमुपशेते तस्मादुत्तरार्धे जुहोति ॥११॥

अथाग्नीधे भक्षमाहरति वषट्कर्तुर्हि भक्षः स आहाध्वर्य उपह्वयस्वेति तं न प्रत्युपह्वयेत नेदस्य हतस्य निरष्टस्य प्रत्युपह्वया इति तदु प्रत्येवोपह्वयेत किं तस्य[५] न प्रत्युपह्वयेत यस्याग्नौ जुह्वति यस्य वषट्कुर्वन्ति तस्मात्प्रत्येवोपह्वयेत स यदा भक्षयति ॥१२॥

अथाहाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा सङ्ख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं मातिरीरिच इति ब्रूयाद्यद्यग्निष्टोमः स्याद्यद्युक्थ्यो वा षोळशी वातिरात्रो वा वाजपेयो वा स्यात्सोमं प्रभावयेत्येव ब्रूयात्सोऽग्नीद्बिभ्रदेव तत्पात्रं नेष्टुरुपस्थमासीदत्यग्निर्वा एष निदानेन यदग्नीन्नेष्टो वै पत्नी निदानेन योषा वै पत्नी वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियतेऽथ नेष्टा पत्नीमुदानयति तामुद्गात्रा संख्यापयति प्रजापतिर्वा उद्गाता योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते स संख्यापयति प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहीति ॥१३॥ इति चतुर्थं ब्राह्मणम् ॥

॥ चतुर्थोऽध्यायः समाप्तः ॥

३. पुꣳसुवैत V 1
४. पुꣳसो TE, V 2
५. See notes

**10.** He mixes (saying) "I am above, I am below; and what space there is between, that was my father; —I saw the Sun on both sides; I am what is highest to the gods in secret". Thus he mixes with (repeating) *"aham', 'aham'* ('I', 'I'), and he bestows manliness on men. Thus having bestowed verility in men, he calls 'Agnīdh'; pronounce the offering prayer of the *Pātnīvata*'. Agnīdh is the same as Agni. The wife is a female and Agni is male. This forms a productive couple. So he says "O Agnīdh, pronounce the offering prayer of *Pātnīvata.*

**11.** He offers (saying) "O Agni! speech (thy) wife". Wife is a female and Agni is male. They form a productive couple. "Together, with the divine Tvaṣṭṛ", for Tvaṣṭṛ transforms the seed that is implanted, thus thereby he transforms the seed that is cast, "Drink *soma—Svāhā*" therewith he offers on the north part of the fire when the *Vaṣaṭ* is pronounced. What other offerings there are, they are the gods and these are the wives; thence it is a pair well-formed. It is in the north (left) side that a woman lies with the man. So he offers in the northern side (of the fire).

**12.** Then the (Adhvaryu) takes (a draught of *soma*) to be served to Agnīdh; because it is indeed the drink of one who pronounces *Vaṣaṭ.* He (Agnīdh) says "O Adhvaryu, invite me". He should not invite him because, how he who is smitten and impoverished be invited?" No; he should, nevertheless, invite him. Should he not be invited, when offering is made in the fire, for him and *Vaṣaṭ* is pronounced for him. Therefore he should be invited so that he can partake (in the *Soma*).

**13.** He then gives directions. "O Agnīdh, sit on the lap of Neṣṭṛ. Neṣṭṛ! make the wife go to and exchange look with the Udgātā. O Unneṭṛ, fill up the Hotās' cup and let no *soma* juice be left". Thus he should direct, if it is *Agniṣṭoma* sacrifice. If it were *Ukthya, Ṣoḍasī, Atirātra* or *Vājapeya,* he should only say "Enlarge the Soma". That Agnīdh, even while holding that vessel, sits on the lap of Neṣṭṛ—for he, the Agnīdh is in reality Agni and the Neṣṭṛ is indeed the wife. A wife is a female and Agni is male. This forms a productive couple. The Neṣṭṛ takes the lady and makes her exchange looks with the Udgātā (saying) "Thou art Prajāpati, the male, the implanter of seed; cast (your) seed in me". (Fourth Brāhmaṇa Ends)

**(Chapter Four Ends)**

## पञ्चमोऽध्यायः

### प्रथमं ब्राह्मणम्

स वै हारियोजनं[1] गृह्णाति स यद्धारियोजनं[2] गृह्णाति पशवो वै देवानां छन्दाꣳसि तद्यथाहेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवꣳह छन्दाꣳसि युक्तानि देवेभ्यो यज्ञं वहन्ति स यदैतच्छन्दाꣳसि देवान्त्समतर्पयन्नथैतच्छन्दाꣳसि देवाः समतर्पयन्नेतस्मिन्ग्रहे तदतः प्राक्तदभूद्यच्छन्दाꣳसि देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समतीनृपन्नथैतच्छन्दाꣳस्येव सन्तर्पयति यदेतं ग्रहं गृह्णाति तस्माद्वाव हारियोजनं गृह्णाति ॥१॥

तं वा एतमतिरिक्तं ग्रहं गृह्णाति यदा हि शंयोराहाथैतं गृह्णाति स यदेतमतिरिक्तं ग्रहं गृह्णातीदं वै देवा अथच्छन्दाꣳस्यतिरिक्तानि मनुष्या अथ पशवोऽतिरिक्ता स्तस्मादेभ्य एतमतिरिक्तं ग्रहं गृह्णाति ॥२॥

द्रोणकलशे वृत्रो वै सोम आसीत्तं यत्र देवाः पात्रेषु व्यगृह्णत तस्य मूर्धो व्यवर्त स द्रोणकलशोऽभवत्तत्र यावान्वा यावान्वा रसः सꣳसुस्रावातिरिक्तो[3] वै स आसीदतिरिक्त एवैतदतिरिक्तं दधाति ॥३॥

तं वा अपुरोरुक्कं गृह्णाति छन्दोभ्यो वा एतं गृह्णाति तेनैवैष पुरोरु[4]ग्मान्यदेनं छन्दोभ्यो गृह्णाति तस्मादपुरोरुक्कं गृह्णाति ॥४॥

स गृह्णात्युपयामगृहीतोऽसि हरिरपि हारियोजनो हरिभ्यां त्वेत्यृक्सामनी वै हरी तदेनमृक्सामभ्यामेव गृह्णाति ॥५॥

अथ धाना आवपति हर्योर्धाना स्थ स ह सोमा इन्द्रायेति यदेवेदं मितं चामितं च छन्दस्तदेवैतद्भक्षयति ॥६॥

अथोन्नेता श्रावयत्यतिरिक्तो वा एष ग्रहोऽतिरिक्त उ वा उन्नेता न ह्येषोऽन्यत्र क्व च नाश्रावयत्यतिरिक्त एवैतदतिरिक्तं दधाति मूर्धन्यधि निधत्ते मूर्धा ह्यस्यैषः ॥७॥

१. हार्योजनं C, M, My, T
२. Same as above
३. सुश्रावा most Mss, TE has सुस्राव
४. पुरोरुङ्मा Ca

## Chapter Five

### BRĀHMAṆA I

1. He now draws the *Hāriyojana graha*. As to why he draws the *Hāriyojana* is this—The metres, forsooth, are the cattle of the gods. Just as the cattle, when harnessed, carry (draw) for men, so do the metres harnessed, draw the sacrifice for the gods. As the metres gratified the gods, the gods gratified the metres through this (*Hāriyojana graha*). Previously the metres conveyed the sacrifice to the gods and thereby gratified them. Now he (Yajamāna) gratifies the metres when he draws this *graha*. Therefore he draws the *Hāriyojana graha*.

2. He draws it as an additional *graha*, because he draws it when the Hotṛ pronounces the chant "*śamyo* etc." (which marks the completion of the offering proper). As to why he draws it as an additional *graha* is because, here are the gods and the metres are in addition to them, and there are men and beasts in addition to them. So he draws it in addition to these.

3. (He draws it) in the *droṇa kalaśa*. Soma was *Vṛtra*; him the gods, contained in vessels. His head flew-up and it became to *droṇa-kalaśa*. In that (head) what little of, (what little of the juice) got stuck, that much was in excess and that excess juice was collected in the excess (additional) part (which is *droṇa-kalaśa*).

4. He draws it without a *Puroruk* chant. This (*graha*) is indeed being drawn for the metres. Since this is for the metres, it is one endowed with a *Puroruk* (by virtue of that). Therefore he draws it without a *Puroruk* chant.

5. He draws (saying) "Thou art taken with a support; thou art green (in colour); harnessed are Ye two green steads—thee to the pair of steads"—for, *Ṛk* and *Sāman* are the pair of steeds. So he draws it only with the *Ṛk* and the *Sāman*.

6. He then throws some parched grain into it (saying) "Ye art the steeds' grains, mixed with Soma for Indra". Whatever metres are there, both measured and unmeasured, they all thereby drink (of the Soma).

7. Then the Unnetṛ calls for the *Śrauṣat*. For, this *graha* is an additional one and the Unnetṛ is also additional; because he does not call for *Śrauṣat* anywhere else. So this extra libation is born by the extra (Unnetṛ). He (calls for *Śrauṣat*) placing the *graha* on his head; or, this vessel (*Droṇa kalaśa*) is the head of Soma (i.e. *Vṛtra*).

अथाह धानासोमेभ्योऽनुब्रूहीत्याश्राव्याह धानासोमान्प्रस्थितान्प्रेष्येति वषट्कृते जुहोत्यनु वषट्कृते जुहोति ॥८॥

अथ धाना विलिप्सन्ते भक्षाय यथाचमसं वा अन्यान्भक्षान्भक्षयत्यथैषोऽतिरिक्तो ग्रहस्तत्र सर्वेषां भक्षस्तस्माद्धाना विलिप्सन्ते ॥९॥

तदुत होता द्रोणकलशं याचति तमवजिघ्रति वषट्कर्तुर्हि भक्ष इति तदु नाद्रियेत धानानामेव लिप्सेत ताः प्राणैरेव भक्षयन्ति न दद्भिः खादन्ति पशवो वा एते नेत्पशून्प्रम्रदी करवामहा इति तस्मात्प्राणैरेव भक्षयन्ति न दद्भिः खादन्ति ॥१०॥

सोऽवजिघ्रति यस्ते देव सोमाश्वसनिर्भक्षो यो गोसनिरिति पशवो वा एते तस्मादाह यस्ते देव सोमाश्वसनिर्भक्षो यो गोसनिरिति तस्य तं इष्टयजुषस्तुतस्तोमस्येतीष्टानि हि यजूꣳषि भवन्ति स्तुताः स्तोमाः शस्तोक्थस्येति शस्तानि ह्युक्थानि भवन्त्युपहूत उपहूतस्य भक्षयामीति तदुपहूत एवैतं भक्षं भक्षयति ता नाग्नौ प्रास्येदग्नौ हैके प्रास्यन्ति यथा वा उच्छिष्टा एवं वा एता भवन्ति या भक्षिताः स यथोच्छिष्टमग्नौ प्रास्येदेवꣳ ह[५] तत्तस्मादुत्तरवेदावेव निवपेत् ॥११॥

अथ पूर्णपात्रान्त्समवमृशन्ति यानप्सुषोमा इत्यन्य आचक्षते यथा वै युक्ता वहेयुरेवं वा एते वहन्ति य आर्त्विज्यं कुर्वन्त्युतो[६] वै युक्तो विलिशत आपो वै भेषजꣳ शान्तिस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति ॥१२॥

ते समवमृशन्ति सं वर्चसा पयसा सं तनूभिरगमन्महि मनसा सꣳशिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति तद्यद्विलिष्टं तत्सन्दधात्यथ मुखमुपस्पृशति ॥१३॥ इति प्रथमं ब्राह्मणम् ॥

५. हि V 1, My
६. कुर्वन्त्युत V 1

8. (He says to Maitrā-Varuṇa) "Recite the invitatory prayer for Soma draughts with parched grains". Having called for the *Śrauṣat*, he says "prompt (the Hotṛ) to pronounce the offering chant for the Soma draughts with parched grains". Then he offers as the *Vaṣaṭ* is pronounced; offers when the *Anuvaṣaṭ* (secondary *Vaṣaṭ*) is uttered.

9. Then they divide the grains (between them) for consuming. In the case of other draughts, they are consumed according to the *camasa* cups (by the respective priests). But this *graha* being an additional one, there are the grains for all (the priests). So they divide the grains.

10. Or sometimes, the Hotṛ, asks for the *droṇa kalaśa* and smells it saying "This is the draught for the one (me) who has done the *Vaṣaṭkāra*. That is not permissible. Only the grains are to be divided. These grains are to be consumed with the breath (only swallowed) and not with the teeth (not to be bitten and eaten). For, these (grains) are cattle; 'Let us not bite the cattle'—so thinking they gulp it with their breath and do not bite with their teeth.

11. He inhales (smells) it (the grains) (saying) "O divine Soma, this draught of yours is winner of horses and winner of cows". For, these (grains) are cattle and hence he says "O' Divine Soma, this draught of yours is winner of horses, winner of cows". "Of that draught offered with *Yajus* formulas, praised with *Stoma* chants"—(This means) the *Yajus* formulas have indeed been chanted already and the *Stoma* hymns have been uttered. "Thou sung by hymns of *Ukthas*" for the *Ukthas* have already been sung. "Of the invited, do I drink invited" — because it is the one invited who drinks this draught. They (the grains after being drunk by the process of smelling) should not be thrown into the fire. Soma throw it into the fire. These which are drunk become as it were *ucciṣṭa* (remainings after being eaten and hence stale). So if he were to throw it into the fire, it would amount to throwing the stale (*ucciṣṭa*). Therefore it should be kept only on the high altar.

12. Thereupon they touch the vessels filled (with water) which some others call *Apsuṣoma* (Soma draughts in the form of water). Just as harnessed (cattle) would carry, in the same way those who perform the priestly duties are carrying. The cattle that carry get broken (tired). Waters are soothing medicine. So with the soothing waters, he cures them and make them healed by water.

13. They touch them (water vessels) (saying) "With lustre, with sap, with bodies have we united; with happy mind. May Tvaṣṭā, the giver of boons, grant us riches and may he smoothen the injured (parts of our) body". Thus they get healed and then they touch their (own) faces. (First Brāhamṇa Ends)

द्वितीयं ब्राह्मणम्

तानि वा एतानि नव समिष्टयजूꣳषि जुहोति स यदेतानि नव समिष्टयजूꣳषि जुहोति नव वा अमूर्बहिष्पवमाने स्तोत्रिया भवन्ति नवैतानि तदुभयत एवैतद्विराजन्न्यूनां करोति प्रजननाय न्यूनाद्धीमाः प्रजाः प्रजायन्त उभयतो ह वै न्यूनात्प्रजापतिः प्रजाः ससृज इतश्चोर्ध्वा इतश्चावाचीस्तथो वा एष एतदुभयतो न्यूनात्प्रजाः सृजत इतश्चोर्ध्वा इतश्चावाचीस्तस्मादेतानि नव समिष्टयजूꣳषि जुहोति ॥१॥

तद्धिंकारो दशमस्तोत्रियाणाꣳस्वाहाकार एतेषां दशमस्तदन्यूना विराड्दशदशिनी भवति या उ वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै ता एतत्समिष्टा भवन्ति स यत्तासु सर्वासु समिष्टास्वथ जुहोति तस्मात्समिष्टयजूꣳषीत्याख्यायन्ते ॥२॥

अथ यद्वेव समिष्टयजूꣳषि जुहोति रिरिचान इव वा एष एतद्भवति यदीजानो यद्ध्यस्य स्वं भवति ततो हि ददाति[1] स यानि त्रीणि प्रथमानि जुहोति यजमानमेवैतै रिरिचानं पुनराप्याययत्यथ यान्युत्तराणि त्रीणि जुहोति या वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायत उपासते ह न्वै ता इमानि न्वै नः समिष्टयजूꣳषि न जुह्वतीमानि नो होष्यन्तीति ता एवैतैर्व्यवर्जति यत्रासां चरणं तदन्वथ यान्युत्तराणि त्रीणि जुहोति यमेवैतद्यज्ञ[2]मतत यमजीजनत्तमेवैतैः[3] प्रतिष्ठापयति यत्रास्य तत्तस्माद्वाव समिष्टयजूꣳषि जुहोति ॥३॥

स जुहोति समिन्द्र णो मनसा नेषि गोभिरिति तन्मनसा रिरिचानमाप्याययति यदाह समिन्द्र णो मनसा नेषीति गोभिरिति तद्गोभी रिरिचानमाप्याययति सꣳसूरिभि-र्मघवन्त्सꣳस्वस्त्या। सं ब्रह्मणा देवकृतं यदस्तीति तद्ब्रह्मणा रिरिचानमाप्याययति सं देवानाꣳसुमतौ यज्ञियानाम् ॥४॥

सं वर्चसा पयसा सं तनूभिरिति तद्वर्चसा रिरिचानमाप्याययति पयसेति रसो वै पयस्तद्रसेन रिरिचानमाप्याययत्यगन्महि मनसा सꣳशिवेन त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥५॥

१. ददति V 1
२. यज्ञमतन्वत V 1, W
३. यमजीजनतं तमे Ca

BRĀHMAṆA II

1. Now he offers these nine *Samiṣṭayajus*. As to why he offers nine *Samiṣṭayajus* is that those *stotra* verses at the *Bahiṣpavamāna* chant are nine (in number). Thus there at both ends are incomplete *Virāj* for the sake of production; it was from that same incomplete source of production on both sides that Prajāpati produced the creatures—from the one (he created) those that grow upwards and from the other those tending to the ground. And in like manner, does he (Adhvaryu) now create creature from that lower source of production on both sides—from the one the upward-growing and from the other those tending to the ground.

2. That *hiṁkāra* (the chanting of '*him*') is the tenth of the *stotras* and the *Svāhā* (chanting) is (the tenth) of these *Samiṣṭayajus* and thus this *Virāj* becomes non-deficient, consisting of tens and tens. Whatever deities he invites by this sacrifice and for whatever deities this sacrifice is performed, they all are thereby collectively sacrificed to (*saṁ-iṣṭa*). Since offering is made when all of them are collected together, these are called *Samiṣṭayajus*.

3. And as to why he offers the *Samiṣṭayajus*— The one who has sacrificed, has, as it were become emptied (exhausted) since he gives away his own self. The first three offerings (of the *Samiṣṭayajuṣ*) fills up the exhausted Yajamāna. And as to the three offerings which he makes next, whichever deities he invites at this sacrifice and for whichever deities this sacrifice is performed, they keep on waiting thinking 'these *Samiṣṭayajus*, they will offer to us, they will (definitely) offer us'. These (same deities) he thereby duly disposes off (after offering) to their respective ways. Thereafter the three last offerings which he makes (by them) he establishes that very sacrifice which he performed, that very one which he created. This is that abode (resting place) for it. Therefore too he offers the *Samiṣṭayajus.*

4. He offers (saying) "With thought lead us, O Indra, to meet with kine"—(By saying) 'With thought' he thereby fills with thought, him who was exhausted. 'With kine'—he thereby fills with cattle, him who was exhausted. "With benefactors, O mighty Lord, with well-being; with Vedic hymns divinely inspired"—(by saying so) he fills with hymns, him who was exhausted. "With the favour of the gods adorable by sacrifices".

5. "With lustre, with sap, with bodies" (so saying)—he fills the exhausted one with lustre. 'With sap' (he says), for, sap is vigour—him who was exhausted, he fills with sap. "We have united with happy thought (mind). May Tvaṣṭā, the giver of boons, grant us riches and may he smoothen our bodies which are injured".

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपा देवो अग्निः। त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधात्वित्येतदाप्याययति यदाह यजमानाय द्रविणं दधात्विति ॥६॥

सुगा वो देवाः सदना अकर्म य आजग्मेदꣳ सवनं जुषाणा इति सुगानि वः सदनान्यकर्म य आगन्तेदꣳसवनं जुषाणा इत्येवैतदाह यदाह य आजग्मेदꣳ सवनं जुषाणा इति भरमाणा वहमाना हवीꣳषीति भरमाणा अह ते यन्ति येऽवाहना वहमानास्ते ये वाहनवन्त इत्येवैतदाह यदाह भरमाणा वहमाना हवीꣳषीत्यस्मे दत्त वसवो वसूनीति तदेना व्यवर्जति यत्रासां चरणं तदनु ॥७॥

याँ(३) आवह उशतो देव देवाꣳस्तान्प्रेरय स्वे अग्ने सधस्थ इत्यग्निं वा आहामूं देवतामावहामूमावहेति ता व्यवर्ज स्वां प्रतिष्ठामन्वित्येवैतदाह यदाह तान्प्रेरय स्वे अग्ने सधस्थ इति जक्षिवाꣳसः पपिवाꣳसश्च विश्व इति जक्षिवाꣳसो हि पशुं त्वत्पुरोळाशं त्वद्भवति पपिवाꣳसः सोमं तस्मादाह जक्षिवाꣳसः पपिवाꣳसश्च विश्व इत्यसुं घर्मꣳ स्वरातिष्ठतान्विति तदेना व्यवर्जति यत्रासां चरणं तदनु ॥८॥

वयꣳ हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह। ऋधगया ऋधगुताशमिष्ठाः। प्रजानन्यज्ञमुपयाहि विद्वानित्यग्निमेवैतेन व्यवर्जति यत्रास्य चरणं तदनु ॥९॥

देवा गातुविदो गातुमित्वा गातुमितेति व्यवर्जत्येवैतेनार्तेन मनसस्पत इमं देवयज्ञꣳस्वाहा वातेधा इत्यवरꣳ स्वाहाकारं करोति परां देवतामयं वाव यज्ञो योऽयं पवते तदेतं यज्ञꣳ संभृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति तस्मादवरꣳ स्वाहाकारं करोति परां देवताम् ॥१०॥

अथ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेति यजमानो वै यज्ञपतिस्तदेनं यजमाने प्रतिष्ठापयति स्वां योनिं गच्छ स्वाहेति तदेनꣳ स्वायां योनौ प्रतिष्ठापयत्येष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहेति तदेनं प्रतिष्ठितमेव सन्तꣳ सर्ववीर्यमन्ततो यजमाने प्रतिष्ठापयति ॥११॥ इति द्वितीयं ब्राह्मणम् ॥

6. "May the gracious Dhātā, Savitā, Prajāpati, the guardian of treasures and the divine Agni accept this offering. May Tvaṣṭā and Viṣṇu, bestowers of children, grant wealth to the Yajamāna. (By saying) 'May Ye grant wealth to the Yajamāna'—he fills (the exhausted)—

7. "Welcoming homes have we readied for you O Gods, who have kindly presented yourselves for this Soma *savana*". He means 'We have prepared conjenial abodes for you who have graced this sacrifice", when he says 'Welcoming homes have we readied for you O Gods, who have kindly presented yourselves for this *Soma Savana.* Carrying and taking forward the offerings' (so saying he means) they are going ahead carrying on their vehicles. (So he says) "Being drawn and carrying the *havis*". They indeed are carrying and moving forward and are having vehicles. This is what he says 'driven forward with their *havis* being carried". "Bestow rich gifts on him" (so saying) he sends them off in their own ways.

8. "The willing gods whom thou broughtest hither, speed them each to his own abode O Agni!", Thus he addressed Agni (earlier)— "Bring hither such and such gods; bring hither such and such gods" so he said to Agni (in the beginning) and to him he now says "See them off; to their respective abodes". That is what he means by saying "Speed them each to his own abode O Agni". "They have eaten and drunk all". (He means) they have eaten the animal and the *puroḍāśa* and have drunk *soma.* So he says "They have eaten and drunk all". "Draw Ye nigh to the air, to the heat, to the light". Thus he sends them off to where they have abodes.

9. "Thee, O Agni, have we chosen here for our Hotṛ at the opening of this sacrifice; severally hast thou offered to them and severally hast thou toiled; well-knowing the sacrifice, draw thou neigh, thou the wise"! (By saying so) he sends off Agni himself to whichever is his abode.

10. "Ye, knower of the path (sacrifice), having found the path (sacrifice), go Ye in the path (enter into the sacrifice)" thus saying he dismisses them. "By that righteous (path) O Lord of mind! enter this divine sacrifice— *Svāhā*". "Give this to the wind"—so saying he utters another *Svāhā.*

11. "O Sacrifice, go to the sacrifice; to the lord of the sacrifice". The Yajamāna is indeed *Yajñapati* (lord of the sacrifice). He thereby establishes it (the sacrifice) in the Yajamāna. "Go to thine own womb-*Svāhā*"—Thus he establishes it in its own womb. "This is thy sacrifice; O Lord of the sacrifice, along with the songs of praise and with all heroes, do thou accept it;—*Svāhā*". Thus the already established sacrifice, he ultimately establishes with all vigour in the Yajamāna. (Second Brāhmaṇa Ends)

अथ तृतीयं ब्राह्मणम्

स वा अवभृथमभ्यवैति स यदवभृथमभ्यवैति यो वा अस्य रसोऽभूदाहुतिभ्यो वा अस्य तमजीजनदथैतच्छरीरमेवास्य तत्र न रसोऽस्ति तदनु परास्यं तदपोऽभ्यवहरत्यापो वा अस्य रसस्तदेनमेतेन रसेन सङ्गमयति[1] तदेनमतो जनयति स उ जात एनं जनयति तस्माद्वा अवभृथमभ्यवैति स यदपोऽभ्यवैति तस्मादवभृथो नाम ॥१॥

तद्यदा समिष्टयजूꣳषि जुह्वति समिष्टयजूꣳषि वा अन्तो यज्ञस्याथ यदेतमभितो भवति तत्सꣳसादयन्ति तत्समादाय चात्वालमुपसमायन्ति स मेखले च कृष्णविषाणे च चात्वाले प्रास्यति माहिर्भूर्मा पृदाकुरित्यसावहर्जीषस्य स्वगाकारो यदेनदपोऽभ्यवहरत्यथैष एतासाꣳस्वगाकारो यदेनाश्चात्वाले प्रास्यति रज्जुरिव हि सर्पः कूपो हि सर्पाणां ग्रहा अथ यदाह माहिर्भूर्मा पृदाकुरित्यस्ति वै विभ्रातृव्यं मनुष्याणां च सर्पाणां च नेदितस्तत्सम्भवादिति ॥२॥

अथ वाचयत्युरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेत वा उ इति यथा सा उरुरभयोऽनाष्ट्रः सूर्याय पन्था एवमयमस्मा उरुरभयोऽनाष्ट्रः पन्था अस्त्वित्येवैतदाहापदे पादा प्रति धातवेऽकरिति तथा यद्यप्यपाद्भवति प्रति हैव ददाति तदेनꣳ सर्वस्मादेनसो वरुण्यात्प्रमुञ्चत्युतापवक्ता हृदयाविधश्चिदिति तद्यदपि हृदयस्थमेनस्तस्मादेनꣳ सर्वस्मात्प्रमुञ्चति ॥३॥

अथाह साम गायेति साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम स यत्साम गायति नेदस्येदꣳ शरीरं बहिर्धा यज्ञान्नाष्ट्रा रक्षाꣳसि हिनसन्निति तत्साम्ना नाष्ट्रा रक्षाꣳस्यपसेधति तस्मादाग्नेय्यां गायत्यग्निर्हि रक्षसामपहन्तातिच्छन्दसि गायन्त्येषा वै सर्वमति यदतिच्छन्दास्तस्मादतिच्छन्दसि गायत्यहावो हाव इति गायति नाष्ट्रा एवैतद्रक्षाꣳस्यपसेधति तेऽग्रेणाग्नीध्रं जघनेन चात्वालमेतेनोदञ्चो यन्त्येषा हि यज्ञस्य द्वाः ॥४॥

१. संगमयन्ति TE

BRĀHMAṆA III

1. He enters (the water) for *Avabhṛtha* (final ablution). The reason why he enters for *Avabhṛtha* is this—what vital sap was (used) in the offerings, that he produced (extracted from Soma plant). So it (Soma) has only the body and no sap in it. It is fit to be thrown away. But that he takes down to the waters. Waters are indeed his sap. So he unites him with his *rasa* (by taking to the waters). Then he (again) produces him. He (Soma) even when produced, produces him (the Yajamāna). Therefore he enters for the *Avabhṛtha*. Since he takes him (Soma) down to the waters, (*avahṛ*) it is called *Avabhṛtha*.

2. This (*Avabhṛtha*) he does when the *Samiṣṭayajus* are offered, for, *Samiṣṭayajus* are the end of the sacrifice. Now these (*soma* husks) are lying all around and so he collects them and having collected them he approaches the *cātvāla* pit. The grass girdle (worn by the Yajamāna) and the black-deer's horn (used by him for scratching the body when needed), he throws into it (*cātvāla* pit) (saying) "Do not become a serpent, nor assume the appearance of a serpent". The disposal (returning to its abode) of the squeezed *soma* stalks is by taking them (husk) into the water. For these two (the girdle and the dark-deer's horn) throwing into the *cātvāla* is the disposal (returning to their abodes). The girdle is like a serpent. The well is the abode of serpents. So he says 'Do not become a serpent nor assume the appearance of a serpent. There is enmity between men and serpents. 'Lest that should spring therefrom (as a serpent)' he thinks (and says do not become a serpent etc.).

3. He makes (the Yajamāna) says "Wide forsooth, is the path which king Varuṇa hath made for the Sun to tread on"—whereby he means to say 'even as there is for the Sun that wide path-way, free from danger and risk, so may there be for me here a wide pathway free from danger and risk'. "For the lame hath he made foot to put down"- Even though the Sun is footless, he puts down (his foot, and walks); and him (Yajamāna) it frees from all the offence done to Varuṇa. "He who forbids all that woundeth the heart" (so saying) he frees him from all the sins including those sins in the heart.

4. He then says "Sing the *Sāman* or say the *Sāman*" or let him say 'sing (the *Sāman*)' because the *Sāmans* are only sung. As to why he sings the *Sāman* is that the evil Rākṣasas may not injure that body of his (now that it is) outside the sacrifice. For, with the *Sāmans*, the evil Rākṣasas are repelled. So he (Prastotṛ) sings (a *Sāman*) dedicated to Agni; for, Agni is a repeller of Rākṣasas. He sings in—Aticchandas (a metre having more than forty-eight syllables). So he sings—By this he vanquishes the terrible Rākṣasas. They then (walk out) northwards in front of the Āgnīdhra, by the back-side of the *cātvāla* pit. That is the door of the sacrifice.

ते यां दिशमापो भवन्ति तद्यन्ति स यः स्यन्दमानानाꣳ स्थावरो ह्रदस्तमभ्यवेयादेता वै वरुणगृहीता आपो याः स्यन्दमानानां न स्यन्दन्ते वरुण्यो वा अवभृथस्तस्मात्ता अभ्यवेयाद्यद्यु ता न विन्देदपि या एव काश्चापो ऽभ्यवेयात्तमपो ऽभ्यवक्रमयति नमो वरुणायाभिष्ठितो वरुणस्य पाश इति तथैनं वरुणपाशो न गृह्णाति ॥५॥

अथ खलु समिधं प्रास्य चतुर्गृहीतमाज्यं गृहीत्वा जुहोत्यग्नेरनीकमप आविवेशा-पान्नपात्प्रतिरक्षन्नसुर्यं दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहेत्यग्ने ह वै यावद्वा यावद्वा देवा अप्सु प्रवेशयांचक्रुर्नेदितो नाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानिति तदेवैतया च समिधा यामेतां प्रास्यत्येतया चाहुत्या समिन्धे समिद्धे देवेभ्यो जुहवामेति ॥६॥

अथापरं चतुर्गृहीतमाज्यं गृहीत्वाश्राव्याह समिधो यजेति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्वरुण्यो ऽवभृथो नेत्प्रजा वरुणो ऽगृह्णादिति तस्मादपबर्हिषश्चतुरः प्रयाजान्यजति ॥७॥

अथाह वरुणायानुब्रूहीति स एष वारुण एककपालः पुरोळाशो भवति स यदेष वारुण एककपालः पुरोळाशो भवति यो वा अस्य रसोऽभूदाहुतिभ्यो वा अस्य तमजी-जनदथैतच्छरीरमेवास्य तत्र न रसोऽस्ति रस उ वा एष यत्पुरोळाशस्तदस्मिन्नेतꣳ रसं दधाति तदेनमतो जनयति स उ जात एनं जनयति तस्मादेष वारुण एककपालः पुरोळाशो भवति ॥८॥

उपस्तृणीत आज्यमथास्य पुरोळाशस्य द्विरवद्यति तत्र हाप्येक ऋजीषस्य द्विरवद्यन्ति तदु तथा न कुर्यान्न वा एतदलमाहुतये न ह्यत्र रसोऽस्ति तस्मादृजीषस्य नावद्येदभिघार्य प्रत्यनक्त्यवदाने[२] आश्राव्याह वरुणं यजेति वषट्कृते जुहोति ॥९॥

अथाहाग्नीवरुणाभ्यामनुब्रूहीति तत्स्विष्टकृद्भाजनꣳ स यदग्नय इत्येव नाह वरुण्यो वा अवभृथो नेदग्निं वरुणो गृह्णादिति तस्मादग्नय इत्येव नाह ॥१०॥

उपस्तृणीत आज्यमथेमꣳ सकृदेव सर्वमवदधाति स यदीतरत्रर्जीषस्य द्विरवद्येत्सकृ-दत्रावद्येद्यद्यु न किम्वाद्रियेत द्विराभिघार्याश्राव्याहाग्नीवरुणौ यजेति वषट्कृते जुहोति[३] ॥११॥

२. Absence of *sandhis* is archaic

३. See notes

5. They go in whatever direction the water is. He (the Yajamāna) descends at a place where the flowing waters are collected as a pool. There waters are holden by Varuṇa and that is why though flowing, they are stagnant. For, *Avabhṛtha* belongs to Varuṇa. Therefore he should enter them. If such (collected pool) waters are not available, he may enter into any water. He then makes himself engulfed by water (saying or making him say) "Homage be to Varuṇa, the noose of Varuṇa, has been trampled upon. Thereby the noose of Varuṇa does not bind him.

6. Thereupon, throwing down a *samidha*, he takes four ladle-full of *ghee* and offers (into the water saying). "The face of Agni entering the waters. The face of Agni entered the waters. O Sun of waters. You escaped from the demons. In every household consume the fire-wood O Agni! Let thy tongue dart forth towards the *ghee—Svāhā*". Once, the gods made so much of, so much of Agni enter into the waters so that the terrible Rākṣasas could not rise up from there. That is what this one (Yajamāna) does now with this *samidha* which he—throws (into the waters) and with this *ghee* offering, (thinking) "On the kindled fire, I will offer to the gods".

7. Then, having taken four ladle-full of *ghee* for the second time, and having called for the *Śrauṣat*, he says "pronounce the offering chant for the *samidha*". He offers four fore-offerings, omitting the one for the *Barhis*. The *Barhis* being offspring, and the *Avabhṛtha* belonging to Varuṇa, he offers four fore-offerings omitting the one to *Barhis*, lest Varuṇa should seize upon his off-spring.

8. Then he says "Recite to Varuṇa". Here the one potsherd of *puroḍāśa* is for Varuṇa. That one pot-sherd of *puroḍāśa* is for Varuṇa because whatever sap there had been in him (Soma) that sap he has produced (extracted) for the offerings. Now it is only the body of the Soma that is here; there is no sap in it. This *puroḍāśa* is verily the sap. So he invests him (Soma) with sap and thereby produces him (in proper form with sap). He (Soma) thus produced, produces him (Yajamāna). Therefore this *puroḍāśa* on one potsherd for Varuṇa.

9. Having smeared the bottom (of the offering *sruk*) with *ghee*, he cuts the *puroḍāśa* into two. Here some make two cuttings of the *soma* husk. But that is not to be done. For that (*soma* husk) is not fit for offering. There is no sap in it. So the *soma* husk should not be cut. He sprinkles *ghee* (on the *puroḍāśa* cuttings) and annoints the cut ends (of the *puroḍāśa*) and having called for the *Śrauṣat*, he says "Recite the offering chant to Varuṇa" and offers as the *Vaṣat* is uttered.

10. Then he says "Recite the invitatory prayer to Agni and Varuṇa". It is the share of the Agni-*Sviṣṭakṛt* and so he does not say 'To Agni'. *Avabhṛtha* is of Varuṇa. Lest Varuṇa might seize upon Agni, he does not say merely 'To Agni'.

11. He spreads the *ghee* on the upper side. Only once he applies (*ghee*) on everything. If he has (already) cut two times the *soma* husk, he should cut it once now. If he did not, he need not mind it. He then sprinkles *ghee* twice and having called for the *Śrauṣat*, he says "Recite the offering prayer to Agni and Varuṇa" and offers it when *Vaṣat* is uttered.

ता वा एताः षळाहुतीर्जुहोति षळ्वा ऋतवः संवत्सरस्य संवत्सरो वै वरुणस्तस्मादेताः षळाहुतीर्जुहोति तदेकमेव जुहुयाद्यावदस्य वशः स्यादादित्यानाꣳ ह्येतदयनमादित्यानीमानि यजूꣳषीति ह्याहुर्यदि त्वेनं यजमानो ब्रूयादथे तरथा जुहुयादेतानेवापबर्हिषश्चतुरः प्रयाजानथाज्यभागावथ वरुणायाथाग्नीवरुणाभ्यामथापबर्हिषौ द्वावनुयाजौ तदु दश दशाक्षरा वै विराड्विराळु वै यज्ञो विराजमेवैतद्यज्ञमभि सम्पादयत्येतद्वङ्गिरसामयनम् ॥१२॥

अथोऽन्यतरथा हुत्वा यस्मिन्कलश ऋजीषं भवति तदादाय तदभिपद्योपहारयति समुद्रे ते हृदयमप्स्वन्तरित्यापो वै समुद्र आपो वा अस्य रसस्तस्मादाह समुद्रे ते हृदयमप्स्वन्तरिति सं त्वा विशन्त्योषधीरुताप इति तदेनमद्भ्यश्चौषधीभ्यश्च सꣳसृजत्येतेनोभयेन रसेन यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहेति तद्यदेव यज्ञस्य साधु तेनैनꣳ सङ्गमयति ॥१३॥

अथानुसृज्योपतिष्ठते देवीराप एष वो गर्भस्तꣳसुप्रीतꣳ सुभृतं बिभृतेत्यद्भ्य एवैनमेतत्परिददाति देव सोमैष ते लोक इत्यापो वा अस्य रसस्तस्मादाह देव सोमैष ते लोक इति परि च वक्षि शं च वक्षीति परि च नो गोपाय शं च न एधीत्येवैतदाह ॥१४॥

अथ पुनरभिमृश्य जपत्यवभृथ निचुम्पुण निचेरुरसि निचुम्पुण अव देवै-र्देवकृतमेनोऽयासिषमित्यव ह्येतद्देवैर्देवकृतमेनो याति सोमेन राज्ञावमर्त्यैर्मर्त्यकृतमित्यव ह्येतन्मर्त्यैर्मर्त्यकृतमेनो याति पशुना त्वत्पुरोळाशेन त्वत्पुरुराव्णो देव रिषस्पाहीति सर्वाभ्यो मार्तिभ्यो गोपायेत्येवैतदाह स्नात्वान्ये वाससी परिधायोदेतः स यथाहिस्त्वचो निर्मुच्येतैवं वरुण्यात्सर्वस्मात्पाप्मनो निर्मुच्योदैति तस्मिन्ह नैनः परिशिष्यते यावच्चन कुमारेऽदति[४] तस्मिन्वै नः किञ्चनैनो यः कुमारो ऽदन्नथ गृहानेत्य समिधमभ्यादधाति देवानाꣳ समिदसीति यजमानमेवैतया समिन्धे स उ यजमानो देवानामनु समिद्धिꣳ समिध्यते ॥१५॥ इति तृतीयं ब्राह्मणम् ॥

४. कुमारेऽदति TE , see notes

तानि वा एतानि पञ्च पात्राण्यन्विमाः प्रजाः प्रजायन्ते समानं तद्यदुपांश्वन्तर्यामयोः शुक्रपात्रमृतुपात्रमाग्रयणमुक्थ्यं पाङ्क्तो वै यज्ञः पाङ्क्ताः पशवः पञ्चर्तवः संवत्सरस्य तस्मादेतानि पञ्च पात्राण्यन्विमाः प्रजाः प्रजायन्ते ॥८॥

तदाहुः षड्वा ऋतवः संवत्सरस्येति यदि वै षळृतवः संवत्सरस्यादित्यपात्रमेवैषांषष्ठं भवति तेनैव तं काममाप्नोति यस्तत्र कामस्तद्वा एतदेकमेव पात्रमन्विमाः प्रजाः प्रजायन्त उपांशुपात्रमेव प्राणो ह्युपांशुः प्राणो हि प्रजापतिः प्राणं ह्येवान्विमाः प्रजाः प्रजायन्ते तस्मादुपांशुपात्रमेवान्विमाः प्रजाः प्रजायन्ते ॥९॥ इति सप्तमं ब्राह्मणम् ॥

॥ षष्ठोऽध्यायः समाप्तः ॥

**8.** Now, these are five vessels from which these creatures are produced. *Upāṁśu* and *Antaryāma* being same are reckoned as (one vessel). With the *Śukra* vessel, the *Ṛtu* vessel, *Āgrayaṇa* and *Ukthya* (they become five). Sacrifice is five-fold. The animals are five-fold. There are five-seasons for a year. Therefore these creatures are produced from those five vessels.

**9.** Some say 'There are six seasons for a year'. If six are the seasons for the year, the *Āditya graha* becomes the sixth one. Only with that (*Āditya graha*), he achieves what he desires for. But indeed, there is only that one *graha* after which creatures are produced here; with the *Upāṁśu graha*. For *Upāṁśu* is the life-breath and life-breath is Prajāpati. Only from the *prāṇa*, these creatures are born. So only from the *Upāṁśu graha*, these creatures are produced. (Seventh Brāhmaṇa Ends)

**(Chapter Six Ends)**

## सप्तमोऽध्याय

### प्रथमं ब्राह्मणम्

प्राणो ह वाव ग्रहः प्राणेन हीदꣳ सर्वं गृहीतं प्राणो वास्य सर्वस्य गृहीतस्तस्माद्ध प्राण एव ग्रहः ॥१॥

तस्य प्राणस्यान्नमेव ग्रहोऽन्नेन ह्ययं प्राणो गृहीतो ऽन्नाद्धि प्राणो जायते तस्माद्धान्नमेव ग्रहः ॥२॥

तस्यान्नस्याप एव ग्रहोऽद्भिर्हीदमन्नं गृहीतमद्भ्यो ह्यन्नं जायते तस्माद्धाप एव ग्रहः॥३॥

तासामपामग्निरेव ग्रहो ऽग्निना हीमा आपो गृहीता अग्नेर्ह्यापो जायन्ते तस्माद्धाग्निरेव ग्रहः ।४।

तस्याग्नेः प्राण एव ग्रहः प्राणेन ह्ययमग्निर्गृहीतः प्राणाद्ध्यग्निर्जायते तस्माद्ध प्राण एव ग्रह एवमेता देवता अन्योऽन्यस्य[1] गृहीता एवꣳह वा एतासां देवतानां गृहीतो[2] भवत्येवं वास्यैता देवता गृहीता भवन्त्येतासां देवतानाꣳ सायुज्यꣳ सलोकतां जयति ॥ ५॥ इति प्रथमं ब्राह्मणम्। ।

### अथ द्वितीयं ब्राह्मणम्

ऐन्द्राग्नेनैतव्यमित्याहुरग्निर्वै सर्वा देवता इन्द्रो वै यज्ञस्य देवता तत्सर्वाश्च देवता आप्नोति यो यज्ञस्य देवता ॥१॥

अथो अप्याग्नेयमेवग्निष्टोम आलभेत तद्धि सलोम यदाग्नेयमग्निष्टोम आलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतेन्द्राग्नानि ह्युक्थ्यानि[1] यद्युषोळशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोळशी यद्युवतिरात्रः[2] स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषो वै रात्रिस्तस्मात्सारस्वतं चतुर्थमालभेतैवमु यज्ञक्रतून्यथायथं व्याकरोति ॥२॥

१. See notes
२. गृहीता + उ

१. ह्युक्थानि My, Ca, C
२. See notes

## Chapter Seven

### BRĀHMAṆA I

1. *Graha*, forsooth, is *prāṇa* (vital air). All these are collected by the *prāṇa*. It is the *prāṇa* that has collected all these. Hence *prāṇa* itself is *graha*.

2. For that *prāṇa*, food is the source. This *prāṇa* is collected by food. It is from food that *prāṇa* emanates. Therefore food itself is *graha*.

3. For that food, waters are the source. This food is collected by the waters. It is from waters that food emanates. Hence waters are themselves, *graha*.

4. For those water, Agni is the source. These waters are collected by Agni. It is from Agni, the water emanates. Therefore Agni itself is *graha*.

5. For that Agni, *prāṇa* itself is the source. This Agni is collected by *prāṇa*. It is from *prāṇa*, that the Agni emanates. So *prāṇa*, itself is *graha*. Thus these deities are sustainers of one another and it is thus these deities get emanated. In the same manner these deities are got emanated by this one (Yajamāna) and thus he attains oneness (*sāyujya*) with these deities and attains share in their worlds (*salokatā*). (First Brāhmaṇa Ends)

### BRĀHMAṆA II

1. They say that one should start with *Aindrāgna*. Agni is all the gods and Indra is the deity of the sacrifice. Thereby he obtains (the presence of) all the gods (as well as) that of the deity of the sacrifice.

2. And in *Agniṣṭoma*, only the *Āgneya pāśu* should be slaughtered. It is the one with the hairs and so *Āgneya pāśu* should be slaughtered in *Agniṣṭoma*. If it be *Ukthya* sacrifice, let him seize as the second *pāśu*, the one for Indra and Agni; for the *Ukthyas* belong to Indra and Agni. If it is *Ṣoḍāśī*, let him seize as the third *pāśu*, the one for Indra, because Indra is *Ṣoḍāśā*. If it is *Atirātra*, let him seize as the fourth *pāśu*, the one for Sarasvatī. For, Sarasvatī is *Vāk* (speech) and *Vāk* is female and so is *rātri* (night) female. Therefore let him seize as the fourth *pāśu*, the one for Sarasvatī. Thus he duly distinguishes between the sacrificial performances.

अथो अप्येकादशिन्यैवेयादित्याहुस्तदाग्नेयं प्रथममालभते वारुणमुत्तममेवं पुनरभ्याकारं तद्य उदयनीयेऽतिरात्रेऽतिरिच्येरꣳस्तानत्र सर्वानालभेत तथास्यैतेऽतिरिक्ताः सन्तोऽनतिरिक्ता भवन्ति ॥३॥ इति द्वितीयं ब्राह्मणम् ॥

### तृतीयं ब्राह्मणम्

एतं वा एते गच्छन्ति य एष तपति ये सत्रमासत एष उ वाव सन्नेष उ वाव स्वर्गो लोकस्तस्मादासीनान्त्स्वपतो व्रजत आहुरासत इत्या हि सतो यन्ति ॥१॥

त एतꣳ षड्भिर्मासैर्यन्ति तस्मात्पराञ्चो ग्रहा गृह्यन्ते पराञ्चि स्तोत्राणि पराञ्चि शस्त्राणि ॥२॥

त एतꣳ षष्ठे मासे गच्छन्ति तदेतस्य रूपं क्रियते य एष तपत्यृक्तः सामतो यजुष्टस्तस्मात्सौर्यं पशुमुपालम्भ्यमालभते सौर्यं ग्रहं गृह्णात्युदुत्यं जातवेदसमिति वादृश्रमस्य केतव इति वा न एतस्मिन्त्स्वर्गे लोके प्रतितिष्ठन्ति त एतस्मिन्त्स्वर्गे लोके प्रतिष्ठाय पुनरावर्तन्ते तस्मात्पुनर्ग्रहा आवर्तन्ते पुनः स्तोत्राणि पुनः शस्त्राणि ते ऽस्मिन्मानुषे लोके प्रतितिष्ठन्ति यावदेषामिह मानुषमायुस्तस्मै ते यदामुँल्लोकं यन्त्यथैतमेव स्वर्गं लोकं यन्ति य एषामेष जितः स्वर्गो लोकः ॥३॥ इति तृतीयं ब्राह्मणम् ॥

### चतुर्थं ब्राह्मणम्

प्रजापते[१]र्हि वै प्रजाः ससृजानस्य पर्वाणि विसस्रꣳसुः स वै संवत्सर एव प्रजापतिस्तस्याहोरात्राण्येव पर्वाणि स एतैर्विस्रस्तैः पर्वभिर्न सꣳहातुꣳ शशाक ॥१॥

तमु वै देवा अभिषज्यन्नेतꣳ संवत्सरं तस्य पर्वाणि समदधुस्तस्य पर्वाणि सन्धायाथास्मा एतदन्नाद्यं प्रायच्छन्यदेतं महाव्रतीयं ग्रहमगृह्णꣳस्तदिमम‌धिनोद्यद्वै मनुष्याणामशनं तद्देवानां व्रतम् ॥२॥

१. प्रजापतेर्ह My, P1

3. Some say, let him proceed with the *Ekādasin* (a sacrifice involving eleven *yupas* or eleven *pāśus*). Then the *pāśu* for Agni should be slaughtered first. The *pāśu* for Varuṇa to be at the end. Then in the same order (as before) whatever *pāśus* are left over in the *Udayanīya Atirātra*—all these can be seized here. Thereby those that were in excess become non-extras. (Second Brāhmaṇa Ends)

## BRĀHMAṆA III

1. Those who sit in (perform) the *Satra* sacrifice, they reach him who is yonder shining (Sun). He is the one existing (Sun) and he is the heavenly world too. That is why those who are sitting, sleeping or going—they are (referred to) as *Āsata* (they are). They (those who perform *Satra Yāga*) reach (*yānti*) upto (*ā*) the (world of) one existing (*sataḥ*).

2. They reach him in six months. Therefore it is that the upward (moving) *grahas* are drawn; the upward (pointed) *stotras* (are adopted) and the upward (pointing) *śāstras* (are employed).

3. They reach him (the Sun) in the sixth month. They are given the form (lustre) of this (Sun) by the *Ṛks*, by the *Sāmans* and by the *Yajus*. Therefore the *pāśu* belonging to Sūrya, fit for being slaughtered (in that occasion) is seized. He draws the *graha* for Sūrya (saying) "The lights bear on high" or "His rays are invisible". They get established in this heavenly world. Having established them (those who perform *Satra Yāga*) in the heavenly world, they (*grahas*, *stotras* and *śāstras*) come back. Therefore the *grahas* return, the *stotras* also return, the *śāstras* too return. They come and settle in the human world, till they have here the life-span of a man. When they (*grahas* etc.) go to the other world, they go only (as escorts) to that heavenly world which has been won by him (the *Satra* performer) (so they return). (Third Brāhmaṇa Ends)

## BRĀHMAṆA IV

1. Prajāpati who creates the living beings had his joints dislodged. Prajāpati is forsooth, the year and days and nights themselves are his joints. With his dislodged joints he could not move about.

2. The gods treated him, the year. His joints got set. Having joined his joints they (the gods) gave him this food by drawing the *grahās* (called) *Mahāvratīya* (pertaining to *Mahāvrata*). That pleases him (Prajāpati). What is food for men is the *vrata* (food to be taken during fast) for gods.

ते होचुर्महद्वा इदं व्रतमभूद्यदिममधिन्वीदिति तस्मान्महाव्रतीयो नाम स एतैः सꣳहितैः पर्वभिरिदमन्नाद्यमभ्युदतिष्ठद्यदिदं प्रजापतेरन्नाद्यꣳ स एवमन्नादोऽभवत्तथो वा एत आत्मानं भिषज्यन्ति ये सत्रमासते तेभ्य एतदन्नाद्यं प्रयच्छन्ति यदेतं महाव्रतीयं ग्रहं गृह्णन्ति स एवमन्नादो भवति यथैषो ऽन्नादः प्रजापतेः सायुज्यꣳ सलोकतां जयति ॥३॥

तं वै वैमृध्या गृह्णाति मृधो वा एतेषाꣳ सर्वा नाष्ट्रा हता भवन्ति ये सत्रमासतेऽथो वैश्वकर्मण्या विश्वे वा एतेषाꣳ सर्वं कर्म कृतं भवति ये सत्रमासते वि न इन्द्र मृधो जहीति वा वाचस्पतिं विश्वकर्माणमूतय इति वा यद्यु ऐन्द्रीं विश्वकर्मणीं[२] विन्देत्तयो गृह्णीयात् ॥४॥

ता वा एताश्चतुस्त्रिꣳशद्व्याहृतयो भवन्त्येताः प्रायश्चित्तयः स यदेताश्चतुस्त्रिꣳ-शद्व्याहृतयो भवन्त्येष वाव प्रजापतिर्यज्ञो य एष तायत एतस्मादेवेमाः प्रजाः प्रजाता एतमेवानुप्रजायन्तेऽप्येतर्हि तदष्टौ वसव एकादश द्वादशादित्यास्त एकत्रिꣳशदिमे द्यावापृथिव्यौ त्रयस्त्रिꣳशे एते वै ते देवा यानाहुस्त्रयस्त्रिꣳशद्देवा इति प्रजापतिरेव चतुस्त्रिꣳश एतावद्वा[३] इदमस्यै तद्ध्यमृतं यद्ध्यमृतं तदस्ति प्रजापतिर्ह्येष सर्वꣳ हि प्रजापतिस्तस्माद्वा एताश्चतुस्त्रिꣳशद्व्याहृतयो भवन्ति ता हैता यज्ञं तन्वत इत्येक आचक्षत एताः प्रायश्चित्तीस्तान्येतानि यज्ञस्यैव पर्वाणि स एष यज्ञस्तायमान एता देवता भवन्नेति ॥५॥

स यदि नु घर्मदुघा ह्वलेदथान्यामुपसङ्क्रामेयुस्तद्यामुपसंक्रामेयुस्तामग्रेण वा दीक्षितशालां यत्र वैनामेतत्पिन्वयन्ति तदेनां प्राचीं वोदीचीं वा स्थापयितवै ब्रूयात्तद्ये एते पुच्छकाण्डम-भितः शिखण्डास्थिनी उच्छ्रयाते[४] तयोर्यद्दक्षिणꣳ स्यात्तस्मिन् जुहुयादेताश्चतुस्त्रिꣳ-शतमाहुतीरेताभिर्व्याहृतिभिः ॥६॥

२. कर्मण ईं–कर्मणीं

३. एतवद्वा Ca

४. उच्च्रयाते My, C

3. They say "Great indeed is this *vṛata* by which (they) pleased him (made him happy). Hence it is called *Mahāvratīya* (the one pertaining to the great *vṛata*). He with his joints set right, approached this food, which is the food of Prajāpati. He thus became the eater of food. In like manner, these (Yajamānas) who perform *Satra Yāga* treat themselves. To them this food is given for which is this *Mahāvratīya graha*, they are drawing. He (each of the performers of the *satra*) becomes the eater of food. Since he is an eater of (that) food, he becomes one with Prajāpati and shares his world with him.

4. He draws it (*Mahāvratīya graha*) with *Vimṛdh* chant. (A *Ṛk* chant that averts destruction). By this destroyer (Vimṛdh hymn) all those destroyers of those who sit in *Satra* sacrifice are killed. And then (they draw) with the *Vaiśvakarman* hymns. Every action is got done by those who sit in *Satra Yāga.* "Shatter those who scron us O Indra" (so they say) or "(Let us invoke) for protection, Vācaspati Viśvakarmā". Thus either the one to Indra or the one to Viśvakarmā should be employed and by that (that *graha*) should be drawn.

5. Now there are thirty-four *vyāhṛtis* (utterances). They are expiations. This Prajāpati, forsooth is sacrifice, which is performed here. From this, these living beings are born and in like manner they are produced again. There are eight Vasus, eleven Rudras, twelve Ādityas—together they are thirty-one. With these heaven and earth they are thirty-three. These are the gods who (collectively) are called thirty-three gods. Prajāpati is the thirty-forth. This (team of thirty four) exists and it is immortal. That which is immortal that exists. He is Prajāpati and Prajāpati is everything. From him these thirty-four *vyāhṛtis.* Some say that these (*vyāhṛtis*) which are expiations are the forms of the sacrifice. They are the joints of the sacrifice. The sacrifice which is performed takes the forms of (these) divinities (in the form of *vyāhṛtis*) and go (to the heaven).

6. If that sacrifice is afflicted (due to the failure to give milk) by the cow (that gives warm milk for *pravargya*) another cow should be chosen. That so chosen is brought in front of the *dīkṣita's* shed, where they appease it. It should be stationed facing east or facing north as told. Those two bones with hair-tufts, protruding on either sides of the tail bone—on the right one among them, he offers these thirty-four offerings with these *vyāhṛtis.*

स यदेवं जुहोति घर्मदुघा वै यज्ञं बिभर्ति स आह्वलत्येतावानु वै यज्ञो यावदेताश्चतुस्त्रिंऽ-शदाहुतय एतावन्तो हि देवा यावन्तो हि देवास्तावान्यज्ञस्तदस्यामेतं यज्ञं दधाति तथैषा[५] यज्ञं तनुत एतान्वत्र प्रायश्चित्ति : ॥७॥

अथ यत्रान्यत्र यज्ञस्य ह्वलेत्तदनु समीक्ष्य यां देवतां मन्येतेयं देवतैतर्ह्यियं यज्ञ इति तस्यै जुहुयाद्यद्यह: प्रस्तुत आग्नीध्रे यदि दीक्षोपसत्स्वाहवनीये स यैव देवता भवत्येष यज्ञस्तर्हि तयैवैतत्पर्व भिषज्यति[६] तया सन्दधाति तया शमयति ॥८॥

अथ यदि पृषदाज्यंऽ स्कन्देत्तदद्भिरनुनिनेतवै ब्रूयादद्भिर्वा इदंऽ सर्वमाप्तमद्भिरे-वैनमेतदाप्रोत्यापो वै शान्ति: शान्तय एव वैष्णव वारुण्यर्चा वरुणो वा अर्पयिता वरुणो वै तदर्पयति यदिदं किञ्चर्च्छति यज्ञो वै विष्णुस्तस्य वा एतदर्पयति स यश्चैवार्पयति यस्य चार्पयति ताभ्यामेवैतत्पर्व भिषज्यति ताभ्यांऽ सन्दधाति ताभ्यांऽ शमयति तस्माद्वैष्णववारुण्यर्चा ययोरोजसा स्कभिता रजांऽसि वीर्येभिर्वीरतमाशविष्ठा। यापत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूताविति ॥९॥

अथाभिमृशति देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु पितृन्पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्ट्विति यद्वै किञ्च स्कन्दत्येष्वेव तल्लोकेषु प्रतितिष्ठति यतमं कतमं चैषां लोकानां यज्ञोऽगंऽस्ततो मे भद्रम-भूदित्येवैतदाशिषमाशास्त उत ह स्माहारुणि: किंऽ स यज्ञेन यजेतेति यो यज्ञस्यात्तेन[७] व्यृद्धेन श्रेयो नाभिगच्छेदित्येतेन ह स्म तदाह यदाशिषमुपगच्छति ॥१०॥ इति चतुर्थं ब्राह्मणम् ॥

### अथ पञ्चमं ब्राह्मणम्

बृहस्पतिरकामयत तेजस्वी ब्रह्मवर्चसी स्यां प्र पुरोधां देवानामाप्नुयामिति स एतंऽ-स्तोममपश्यदेतंऽ सत्रं तेनायजत स तेजस्वी ब्रह्मवर्चस्यभवत्प्र पुरोधां देवानामाप्नोत् ॥१॥

५. See notes

६. पर्वभिर्भिषज्यति V 1, V 2, H

७. यज्ञस्यार्त्तेन Ca

**7.** Those he offers because the cow (*Gharmadughā*) indeed, bears the sacrifice. So much is the sacrifice as these thirty-four offerings; that much number of deities are there and so much is the sacrifice. So he deposits this sacrifice in that cow (*Gharmadughā*). So these *vyāhṛtis* are the forms of the sacrifice. This is the expiatory act.

**8.** So in similar manner, whichever sacrifice is afflicted (by the cow failing to yield milk), he should take note of it and whichever deity he feels (is the cause), he should identify that deity as "This is the deity and this is the offering and offer (*prāyascitta*) for that. But when Āgnīdhra is conducted, in the rites pertaining to *dīkṣā* (imitation) (if any aspect of the sacrifice is afflicted), then whichever is the deity connected with that sacrifice, by that same deity that sacrifice has to be treated. By that he sets right and by that he makes it alright.

**9.** If clotted *ghee* (*ghee* mixed with milk) be spilt, let him pour water saying 'everything here being pervaded (obtained) by waters', because only with waters he obtains this. Waters are (producers of) tranquility. The *Ṛk mantras* pertaining to Viṣṇu and Varuṇa are also (bestowers of) tranquility. Varuṇa is the inflictor (of affliction). It is Varuṇa who has caused whatever (affliction) has befallen. Sacrifice is Viṣṇu and it is on that sacrifice this (affliction) has befallen. So he who inflicts and he who is inflicted, by those very two (*Ṛk mantras* pertaining to those two deities) he treats this joint (of the sacrifice); by those two he makes it alright. Therefore with the *Ṛk mantras* pertaining to Viṣṇu and Varuṇa (he treats). "They by whose vigour the spheres were supported, who are in prowess the strongest and the mightest, who exercise authority unrestricted, to (those) Viṣṇu and Varuṇa hath it gone at the earlier offering".

**10.** Then he touches (the afflicted part of the spilt material) (saying) "To the gods, to the sky hath the sacrifice gone; may wealth thence accrue to me. To the men, to the air hath the sacrifice gone; may wealth thence accrue to me. To the *pitṛs*, to the earth hath the sacrifice gone. May wealth thence accrue to me". Whatever gets spilt, it settles down only in (one of) these worlds. 'To whatever world the sacrifice hath gone, thence happiness (may) come to me". This is the blessing he seeks thereby. Here now Āruṇi said, "Why should one perform sacrifice if he is not to get benefit, if the sacrifice is to be afflicted or flowed (by unforeseen) miscarriage?". Therefore it is said that he obtains (the aforesaid) blessings. (Fourth Brāhmaṇa Ends)

## BRĀHMAṆA V

**1.** Bṛhaspati desired 'let me acquire glory and brahminic lustre and attain the chief priesthood of the gods. He saw this *stoma* (song of praise). He conducted this *sava* (rite). He became glorious and possessed of brahminic lustre and attained chief priesthood of the gods.

स यः कामयेत तेजस्वी ब्रह्मवर्चसी स्यां प्र पुरोधामाप्नुयामिति स एतेन यजेत तेजस्वी हैव ब्रह्मवर्चसी भवति प्र पुरोधामाप्नोति ॥२॥

त्रिवृत्स्तोमो भवति तेजो वै ब्रह्मवर्चसं त्रिवृत्स्तोमस्तेज एवैतद्ब्रह्मवर्चसमवरुन्धे तेजस्येव ब्रह्मवर्चसे प्रतितिष्ठति ॥३॥

रथन्तरं पृष्ठं भवति तेजो वै ब्रह्मवर्चसꣳरथन्तरं तेज एवैतद्ब्रह्मवर्चसमवरुन्धे तेजस्येव ब्रह्मवर्चसे प्रतितिष्ठति ॥४॥

अष्टाशतꣳस्तोत्रिया भवन्ति शतायुर्वा अयं पुरुषः शतवीर्यः शततेजाः पुरुषमेवैतत्सꣳस्करोति ॥५॥

अष्टा उ वा इमा स्तोत्रिया भवन्त्यष्टाक्षरा वै गायत्री तेजो वै ब्रह्मवर्चसं गायत्री पुरुषमेवैतत्सꣳस्कृत्याथास्मिन्नेतत्तेजो ब्रह्मवर्चसं दधाति ॥६॥

बृहत्या संपद्यते बृहत्या वै देवाः स्वर्गं लोकꣳसमाश्नुवत तथो वा एष एतद्बृहत्यैव स्वर्गं लोकꣳ समाश्नुते[१] ॥७॥

आज्येनाभिषिञ्चति तेजो वा आज्यं तेज एवास्मिꣳस्तद्दधाति तद्वा आहुस्तेजो वा आज्यं नाज्येनाभिषिञ्चेदीश्वर एनं प्रदहेत्सोमेनैवाभिषिञ्चेदित्येष ह वा अभिषिक्तो यत्सोमाभिषेकस्तद्वा आहुर्वज्रो वै सोमो न सोमेनाभिषिञ्चेन्नेदेतं वज्रेण हिनसानीति तदु सोमेनैवाभिषिञ्चेद्यथास्मै शिवः शान्तो भवति ग्रहोच्छिष्टेनैवाभिषिञ्चेत्स हि शान्त उपाहतं[२] काममाप्नोति यत्सोमाभिषेके शिव उ अस्मै शान्तो भवति ॥८॥

शुक्रामन्थिनोः सꣳस्रवेणाभिषिञ्चत्येतौ वा अनु सर्वꣳ सवनꣳ हूयते सर्वꣳह्येतौ ग्रहौ सर्वत्वायैव कृत्स्नताया अथो प्रजननमु वा एतौ ग्रहौ प्रजायते ह प्रजया पशुभिस्तस्माच्छुक्रामन्थिनोः सꣳस्रवेणाभिषिञ्चति ॥९॥

कृष्णाजिने ऽध्यभिषिञ्चत्यृक्सामनोर्वा[३] एतद्ब्रह्मण आयतनं यत्कृष्णाजिनमृक्सामनोरेवैनं ब्रह्मण्यध्यभिषिञ्चति ॥१०॥

१. समश्नुते My, H

२. उपाह तं TE, P1

३. Archaic for साम्नो

**2.** He who desires 'May I become glorious and possessed of brahminic lustre and attain chief priesthood'; let him perform this (*stoma*). He attains glory and brahminical lustre and attains chief priesthood.

**3.** The *stoma* happens to be three fold. Three fold *stoma* becomes glory and brahminic lustre. It includes glory and brahminic lustre. He gets established in glory and brahminic lustre.

**4.** *Rathantara* becomes the *pṛṣṭha* (supporting *Sāman*). *Rathantara* is glory and brahminic lustre. It includes glory and brahminic lustre. He gets established in glory and brahminic lustre.

**5.** There are one hundred and eight *Stotriya Sāmans* (*Sāmans* which contain trio of *Ṛks* in each). This man is of hundred years life-span with hundred fold vigour and hundred-fold glory. It only fashions this man.

**6.** Or there are eight *stotriya Sāmans*. For, Gāyatrī has eight syllables. Gāyatrī is glory and brahminic lustre. It fashions the man and puts this glory and brahminic lustre into him.

**7.** It gets connected with Bṛhatī. It is by means of Bṛhatī, the gods attained the heavenly world. That is why it is *bṛhat* (big) by which one attains the heavenly world.

**8.** They bathe him (anoint him) with *ghee*. *Ghee* is brilliance. So it puts brilliance into him. But they say that *ghee* being brilliance, one should not bathe him with *ghee*. Because it will burn him. So only with *soma* juice, he should be bathed. This one so bathed becomes *Somābhiṣikta* (bathed in *soma*). There they say that Soma is thunderbolt and so one should not bathe him with *soma* lest he should injure him with thunderbolt. No, he should be bathed only with *soma* juice. In his case it becomes sober and benificial. He should bathe only with (*soma*) which is remanent in the *graha*. That they say is sober. Thus it is said he achieves that wish which he could get by *Somābhiṣikta* (even though it may be only with remanent of Soma in the *graha*). It becomes beneficial and sober for him.

**9.** He should be bathed by that (*soma*) which trickles from the *Śukra* and *Manthi grahas*. These (*Śukra* and *Manthi grahas*) are offered at every *savana*. These two *grahas* are everything. To become everything and to become whole (he should be bathed by those two). These two *grahas* are creation. He is born along with issues and cattle. So he should be bathed by what trickles from *Śukra* and *Manthi grahas*.

**10.** Seated on a back antelope's skin, he bathes him. This is the abode of the Ṛg Veda and Sāma Veda, which is the black antelope's skin. So he bathes him seated on the Ṛg Veda and Sāma Veda.

देवस्वो भवन्त्येतावन्तो वै देवानाꣳ स वा यद्देवस्वस्तैरेवैवमेतत्प्रसूतं तꣳ सवेनाभिषिञ्चति ॥११॥

त्रयस्त्रिꣳशद्दक्षिणा भवन्ति त्रयस्त्रिꣳशद्वै सर्वा देवताः सर्वासां देवतानामाप्तये ऽश्वश्चतुस्त्रिꣳशो दक्षिणानां भवति प्रजापतिर्वै चतुस्त्रिꣳशो देवतानां प्राजापत्य उ वा अश्वस्तेन प्रजापतिमाप्नोति बार्हस्पत्यो ग्रहो ऽतिग्राह्यो भवति बार्हस्पत्यः पशुरुपालम्भ्यो भवति सवस्य समृद्ध्ये ऽथो सवमेवैतद्व्याकरोति तथास्यैष सवः समृद्धो भवति ॥२॥ इति पञ्चमं ब्राह्मणम् ॥

**अथ षष्ठं ब्राह्मणम्**

देवा ह वै यज्ञं तन्वाना असुररक्षसानां दक्षिणत आसङ्गाद्बिभयांचक्रुस्ते होचुरसुररक्षसानां दक्षिणत आसङ्गाद्बिभ्यतो हन्त यो नो वीर्यवत्तम इति स न इदं दक्षिणतो गोपायत्वथ वयमुत्तरतोऽभयेऽनाष्ट्रे निवाते यज्ञं तनवामहा इति तथेति होचुः ॥१॥

ते हेन्द्रमूचुस्त्वं वै नो वीर्यवत्तमो ऽसीति त्वन्न इदं दक्षिणतो गोपायाथ वयमुत्तरतोऽभये ऽनाष्ट्रे निवाते यज्ञं तनवामहा इति ॥२॥

स होवाचेन्द्रः किं मम ततः स्यादिति ते होचुरेतदह ते ब्रह्मत्वमित्येषो ते ब्राह्मणाच्छꣳसीयेति तस्माद्ब्रह्मण एव ब्राह्मणाच्छꣳसीयात्तस्माद्ब्राह्मणाच्छꣳसिनं प्रवृणत इन्द्रो ब्रह्मा ब्राह्मणादित्यैन्द्री ह्येषा होत्रा तस्माद्य एव ब्राह्मणानां वीर्यवत्तमः स ब्रह्मा स्याद्यो वा एषामनूचानतमः स एषां वीर्यवत्तमस्तदेषो ह दक्षिणतो गोपायत्यथैत उत्तरतोऽभये ऽनाष्ट्रे निवाते यज्ञं तन्वते ॥३॥

स यत्रैष आह ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा जपत्येतत्ते देवसवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे। तेन यज्ञमव तेन यज्ञपतिं तेन मामव। मनो ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु । अरिष्टं यज्ञꣳसमिमं दधातु विश्वे देवास इह मादयन्ताꣳस्तुत सवितुः प्रसव इत्यसौ न्वेवैतस्य यजुषो बन्धुर्य एवासौ दर्शपूर्णमासयोरथ यदाह स्तुत सवितुः प्रसव इति सविता वै देवानां प्रसविता स्तुत सवितृ[1]प्रसूता इत्येवैतदाहैतावदेव ब्रह्मा जपेदित्याहुः ॥४॥

१. सवितुः TE, see notes

11. These become *Devasus* (rites of Devas). They, the *Devasus* are the feast for the gods and hence they are *Devasus.* He who is born of these very *Devasus,* is bathed by this *sava.*

12. (On this occasion) there are thirty-three (cows) as *Dakṣiṇās.* All the gods together, come to thirty-three. To achieve (win over) all those gods (thirty three cows are to be gifted). Prajāpati is the thirty-fourth among the gods. The horses does indeed, belong to Prajāpati. By (giving) that he attains (wins over) Prajāpati. The *Bṛhaspatya graha* is an extra *graha* drawn. The *pāśu* for Bṛhaspati happens to be seized as a supplement, for the completion of the sacrifice. Thus all these are explained. This and this *sava* of his becomes complete (wholesome). (Fifth Brāhmaṇa Ends)

## BRĀHMAṆA VI

1. Now once on a time, the gods while planning to perform a sacrifice, were afraid of an attack from the Asura-Raksaṣas from the southern direction. They said (unto themselves) "We are scared of an attack from the Asura-Rakṣasas from the southern direction. Whoever is mightiest amidst us, let him protect us at the southern side. We shall move to the northern side and perform the sacrifice at a secured place free from fear". They agreed.

2. They told Indra, "Thou art the mightiest amidst us. So you protect us on this southern side. We will perform the sacrifice in the north at a secured place free from fear.

3. Then Indra asked "What then will be (the benefit) to me?" They said "Brahmanhood shall be yours. Thou shelt officiate as *Brāhmaṇācchaṁsin*". So Indra accepted the office of *Brāhmaṇācchaṁsin.* He is Brahmā because he is a Brāhmaṇa and thus this *Hotra* (office of the Hotṛ) belongs to Indra. Therefore whosoever is the most powerful among the Brāhmaṇas shall be Brahmā. Whosoever is the most learned (in Vedic lore) is the most powerful among Brāhmāṇas. He sits at the southern side (of the sacrificial hall). Then these (others) perform sacrifice at the northern side at a secured place free from fear.

4. When he (Prastotṛ) says "O Brahman, the commander, let us praise" and then Brahmā mutters "O Divine Savitṛ, they have announced the sacrifice for Brahman, the Bṛhaspati. So protect this sacrifice. So protect the lord of the sacrifice. So protect me. May my mind touch the glow of *ghee.* May Bṛhaspati conduct this sacrifice. Let him make this sacrifice free from affliction. Let the all gods (*Viśvedevas*) enjoy here; O those born of Savitṛ, praise". The explanation of this *mantra* is the same as said in the context of the *Darśapūrṇamāsa.* When he says, "O those born of Savitṛ, praise". It means this Savitṛ is indeed the impeller (progenitor) of the gods. So he only says "Praise Ye, those born of Savitṛ". They say that Brahmā should mutter only this much.

तद्वा आहु र्देव सवितरेतद्बृहस्पते प्रेत्येतावदेव ब्रह्मा जपेदिति सविता वै देवानां प्रसविता सवितारमेवैतत्प्रसवायोपधावति यदाह देवसवितरेतदिति बृहस्पते प्रेति बृहस्पतिर्वै देवानां ब्रह्मा तद्य एव देवानां ब्रह्मा तस्मा एवैतत्प्राह तस्मै निवेदयति तस्य नार्तिर्न ह्वला भवति तस्मादाह बृहस्पते प्रेत्येतावदेव ब्रह्मा जपेत् ॥५॥

अथ मैत्रावरुणः प्रसूतो देवेन सवित्रा जुष्टं मित्रावरुणाभ्यामिति मैत्रावरुणो वा एष मित्रावरुणौ वा अस्य स्वे देवते ताभ्यामेवैतज्जुष्टं करोति ताभ्यां निवेदयति तस्मादाह जुष्टं मित्रावरुणाभ्यामिति ॥६॥ इति षष्ठं ब्राह्मणम् ॥

॥ सप्तमोऽध्यायः समाप्तः॥

5. Some others say "O divine Savitṛ, this O Bṛhaspati, forwards"—upto this, Brahmā should mutter. For, Savitṛ is the impeller of the gods. This is only hastening Savitṛ to impell, when he mutters "O divine Savitṛ prompt this Bṛhaspati". Bṛhaspati is the Brahmā for the gods. So whoever is the Brahmā of the gods, to him this is addressed; to him this appeal. He does not have any suffering nor any affliction. Therefore he says Brahmā should mutter only upto "O Bṛhaspati forwards".

6. These the Maitra-Varuṇa (priest) mutters. "Impelled by the divine Savitṛ, acceptable to Mitra and Varuṇa". This is Maitrā Varuṇa. Mitra and Varuṇa are its own deities. Thus he announces it to those who are the deities of Maitrā-Varuṇa. He appeals to them. So he says 'acceptable to Mitra and Varuṇa'. (Sixth Brāhmaṇa Ends)

**(Chapter Seven Ends)**

## अष्टमोऽध्यायः

### प्रथमं ब्राह्मणम्

प्रजापतिर्हि वा अꣳशुः स वा अस्यैष आत्मैवात्मा हि प्रजापतिः स यदꣳशुं गृह्णन्त्यात्मानमेवास्यैतत्सꣳस्कुर्वन्ति तमस्यात्मानꣳ सꣳस्कृत्य तस्मिन्नेतान्प्राणान्दधति यथा-यथास्यैते प्राणा ग्रहाः ॥१॥

स यस्यैतं गृह्णन्ति तस्यारम्भणवत्तरा[1] इव प्रतिष्ठिता इव प्राणा भवन्त्यथ यस्यैतन्न गृह्णन्त्यनारम्भणतरा इवास्यायततरा इव प्राणा भवन्ति स यस्यैतं गृह्णन्ति स ह कृत्स्न एव सर्वतनूरमुष्मिँल्लोके संभवति तस्माद्वा अꣳशुर्ग्रहीतव्यः ॥१२॥

स यस्याहैतं गृह्णन्त्येष एवास्य तर्ह्यात्मा भवत्यथ यस्यैतं न गृह्णन्त्येष एवास्य तर्हि सोम आत्मा भवति सोमो हि प्रजापतिः स यदेतस्यैतान्ग्रहान्गृह्णन्ति तदस्यैतस्मिन्नात्मन्येतान्प्राणान् दधाति यथा यथास्यैते प्राणा ग्रहाः स उ कृत्स्न एव सर्वतनूरमुष्मिँल्लोके संभवति ॥३॥

तमौदुम्बरेण पात्रेण गृह्णाति प्रजापतिर्वा एष प्राजापत्यो यदुदुम्बरः प्रजापतिर्वा अꣳशुस्तस्मादौदुम्बरेण गृह्णाति ॥४॥

चतुः स्रक्तिना गृह्णाति त्रय इमे लोकाः प्रजापतिमेवातिचतुर्थी तस्माच्चतुः स्रक्तिना गृह्णाति ॥५॥

अथ यद्वेव चतुःस्रक्तिना गृह्णाति प्रजापतिर्वा एष दिशः स्रक्तयः सर्वास्वेवैतद्दिक्षु प्रजापतिं दधाति तस्माद्धिमाः प्रजा दिशि दिश्येव प्रजायन्ते ॥६॥

अथ यद्वेव चतुःस्रक्तिना गृह्णाति प्रजापतिर्वा एष दिशः स्रक्तयः सर्वाभ्य एवास्मा एतद्दिग्भ्यो ऽन्नाद्यमिन्द्रियं वीर्यं दधाति तस्माच्चतुः स्रक्तिना गृह्णाति ॥७॥

स वै तूष्णीमेवाꣳशून्निवपति तूष्णीं ग्रावाणमादत्ते तूष्णीमुपसृजति तूष्णीꣳ सकृदभिषुत्यानवानं जुहोति तदेनं प्रजापतिं करोत्यथ हिरण्यमभिव्यनित्यायुर्वा अमृतꣳ

१. तस्यारम्भणवन्त TE

## Chapter Eight

### BRĀHMAṆA I

1. The *Aṁśu graha* is, forsooth, Prajāpati. That (*graha*) is the self of this (sacrifice); for, Prajāpati is the self. Therefore when they draw that *Aṁśu graha*, they fashion that self of his. Thus having fashioned his self, they put in, these vital airs. As these vital airs are (infused) they are (becoming) *grahas*.

2. For whomsoever they draw this *Aṁśu graha*, his vital airs get established at the commencement itself, as it were. And for whomsoever they do not draw it, his vital airs as it were, are not-well-commenced and not well-spread. For whom he draws, he becomes whole and fully shaped in the yonder world. So the *Aṁśu graha* should be drawn.

3. For whomsoever, they draw this (*graha*) this becomes the self of his. For whomsoever it is not drawn, for him the Soma itself becomes the self. Soma is Prajāpati. Because they draw these *grahas* for this *sava* (rite); these vital airs happen to be installed in the self of this (Yajamāna). As and when these *grahas* which become the self, are drawn, then he becomes whole and fully fashioned in the other world.

4. He draws it with a vessel made of *Audumbara* wood. This (*graha*) is indeed, Prajāpati and *Udumbara* belongs to Prajāpati and Prajāpati is *Aṁśu graha*. So he draws it with an *Audumbara* vessel.

5. He draws it with a square vessel. For, here are the three worlds and Prajāpati is the fourth. So he draws with a square vessel.

6. Again why he draws with a square vessel is this—Prajāpati is these quarters. These four sides (of the square vessel) install Prajāpati in all these (four) directions (in the four sides of the vessel). That is why these creatures are born in each of the quarters.

7. Again why he draws it with a square vessel is this—Prajāpati being these quarters, i.e. the four sides (of the vessel) he provides with food, energy and vigour to all these quarters. Hence he draws with a square vessel.

8. He silently throws down the *aṁśus* (*soma* plants); silently he takes up the (pressing) stone; silently he drenches it (with water) and after silently pressing (the stone) once, he offers. Thereby he makes him (Yajamāna) to be Prajāpati. Then he smells a piece of gold (placed on it). Gold is immortal life. When he inhales Prajāpati's life-breath along with his in-breathing, he disarranges (the Prajāpati's

हिरण्यꣳ स यदेतस्य प्राणस्य प्रजापतेः प्राणन्वोदनन्वा वि वा लिशति क्षिणोति वायुर्वा अमृतꣳ हिरण्यं तदेवास्यायुषामृतेन सन्दधाति तच्छमयति तस्माद्धिरण्यमभिव्यनिति ॥८॥

तदुहोवाच राम औपतस्विनिरुरुगा इतरं मह्यमाचार्यो ऽब्रवीदिति होवाच काममेव प्राण्याच्चोदन्याच्चेति यद्वाव तूष्णीमꣳशूꣴन्निवपति तूष्णीं ग्रावाणमादत्ते तूष्णीमुपसृजति तूष्णीꣳ सकृदभिषुत्य जुहोति तदेवैनं प्रजापतिं करोतीति होवाच तूष्णीं कर्मणैवेत्यथ हिरण्यमभिव्यनिति तस्योक्तो बन्धुः ॥९॥

तदु होवाच बुळिल आश्वतराश्विनौ तमभिषुणुयादिति होवाचाभिषुणोति वा अन्याभ्यो देवताभ्यः स यदेनमभिषुणुयादित्यन्याभिरेनं देवताभिरभ्यारोहयेदुषुत्यैव[2] गृह्णीयात्तदेवाभिषुपतभाजनमिति ॥१०॥

तदु होवाच याज्ञवल्क्यो ऽभिषुणुयादेवैतमिति होवाच न सोम इन्द्रमसुतो ममाद नाब्रह्मणो मघवानꣳ सुतास इति वा ऋषिणाभ्यनूक्तमस्ति यावद्वा एतं नाभिषुण्वन्तीति नैवास्मिꣳस्तावद्रसं दधति न तावदलमाहुतये भवत्यथ यदेवैनमभिषुण्वन्तीत्यथैवास्मिन्रसं दधत्यथालमाहुतये भवति तस्मादेनमभिषुणुयादेवेति तं वा अभिषुण्वन्त्सकृदभिषुणोति स यदहैनमभिषुणोति तदाहास्मिन्रसं दधाति तथो अलमाहुतये भवति यद्वभिषुण्वन्त्सकृदभिषुणोति तथो एनमन्याभिर्देवताभिर्नाभ्यारोहयति तस्मादेनमभिषुणुयादेवेति ॥११॥

तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा द्वादश वै मासाः संवत्सरस्य संवत्सरो वै प्रजापतिः प्रजापतिर्वा अꣳशुस्तस्माद्द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणाः ॥१२॥

ता गर्भैः सह चतुर्विꣳशतिर्भवन्ति चतुर्विꣳशतिर्वा अर्धमासाः संवत्सरस्य संवत्सरो वै प्रजापतिः प्रजापतिर्वा अꣳशुस्तस्माद्गर्भैः सह चतुर्विꣳशतिर्भवन्ति चतुर्विꣳशतिꣳ ह त्वा एता ददौ प्रथमगर्भाः ककुस्त[3] ऋषभाद्धिरण्यम् ॥१३॥

२. रोहयेदुद्यत्यैव Ca , see notes

३. ककूस्त MD, कौकुस्थ on कउक्थस्त V2, My and H alone ककुस्त

*prāṇa*) and hurts him. So he unites him with immortal life and makes him wholesome. Therefore he smells the piece of gold.

**9.** Now Rāma, son of Upatasvin said "My very learned preceptor told me otherwise. (He has said) let him freely breath out and freely breath in". "That he silently throws down the *aṁśus*, silently takes up the stone, silently drenches it and after silently pressing it once, he offers it and thereby makes him (the Yajamāna) to be Prajāpati—thus that the entire action to be done silently"—the significance of this has been told.

**10.** Now Buḷila, the son of Āśvatarāśvi—"Let him not press (the stone)". He further said "They do press for other deities and if he does the pressing here too, it would amount to equating him (Soma) with other deities. He should draw it after (only) raising (the pressing stone). That (raising) itself makes it (as if) subjected to pressing.

**11.** Now Yāgñavalkya spoke. "Let him press" he said, "The unpressed *soma* delighted not the mighty Indra, nor the outpressed draughts without prayer"—Thus spoke the Ṛṣi (in Ṛg Veda). As long as he is not pressed, it does not hold (give) the juice to that extent and what (it gives) will not be enough for oblation. Only when he is pressed, he holds (gives) that much juice enough for the oblation. Therefore he has to be pressed. While pressing, he presses (only) once. When he thus presses (once) he bears (gives) juice and then it becomes sufficient for oblation. While pressing, he presses (only) once and thereby he does not equate it with other deities. Therefore let him press it.

**12.** Twelve young cows, pregnant for the first time are the *dakṣiṇā* (for the priest for this *graha*). Now there are twelve months in the year and Prajāpati is the year and the *aṁśu* is Prajāpati. Therefore twelve young cows pregnant for the first time are the *dakṣiṇā*.

**13.** They along with their calves in the wombs make twenty-four. There are twenty-four half-months for a year and Prajāpati is the year and the *aṁśu* is Prajāpati. So it (the *dakṣiṇā*) becomes twenty-four with the calves in the wombs. Indeed twenty-four of these (cows and calves together) in first pregnancy, did Kaukusta give, besides a bull and gold (as *dakṣiṇā*).

स वा एष नैव सर्वस्येव ग्रहीतव्य आत्मा ह्यस्यैष सर्वꣳह्यात्मा नेत्सर्वस्येव सर्वं करवाणीति योन्वेव ज्ञातस्तस्य ग्रहीतव्योऽथ योऽनूचानो ऽनूक्तेन हि तस्य प्राप्तो भवति ॥१४॥

सहस्रे ग्रहीतव्यः सर्वꣳहि सहस्रꣳ सर्वꣳह्येष सर्ववेदसे ग्रहीतव्यः सर्वꣳ हि सर्ववेदसꣳ सर्वꣳह्येष सत्रे ग्रहीतव्यः सर्वꣳ हि सत्रꣳ सर्वꣳह्येष वाजपेये राजसूयेविश्व जिति सर्वपृष्ठे ॥१५॥ इति प्रथमं ब्राह्मणम् ॥

द्वितीयं ब्राह्मणम्

प्रजापतिर्ह वा अꣳशुः स वा अस्यैष आत्मैवात्मा हि प्रजापतिर्वागेवादाभ्यः स यदꣳशुं गृहीत्वादाभ्यं गृह्णात्यात्मानमेवास्यैतत्सꣳसकृत्य तस्मिन्नेतां वाचं दधाति ॥१॥

अथ मनो ह वा अꣳशुर्वागदाभ्यः प्राण एवाꣳशुरुदानो ऽदाभ्यश्चक्षुरेवाꣳशुः श्रोत्रमदाभ्यः स यदेतौ ग्रहौ गृह्णाति सर्वत्वायैव कृत्स्नतायै ॥२॥

अथ देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त त एतस्मिन्नेव यज्ञे प्रजापतावस्पर्धन्तास्माकमयꣳ स्यादस्माकमयꣳ स्यादिति ततो देवा एतं ग्रहं ददृशुरेतमदाभ्यं ते सवनानि प्रावृहन्त ते सर्वं यज्ञꣳसमवृञ्जत निरभजन्नसुरान्त्सपत्नान्यज्ञात् ॥३॥

ते होचुरदभाम वा एनानिति तस्माददाभ्यो न वै नोऽदभन्निति तस्माद्वेवादाभ्यो वागु वा अदाभ्यः सेयमदब्धा वाक्तस्माददाभ्य एवꣳह वाव द्विषतः सपत्नस्य सर्वं यज्ञꣳ संवृङ्क्त एवं द्विषन्तꣳ सपत्नꣳ सर्वस्माद्यज्ञान्निर्भजति बहिर्धा करोति यस्यैवं विदुष एतं गृह्णन्ति स येनैव पात्रेणाꣳशुं गृह्णाति तस्मिन्नेव पात्रे निग्राभ्याभ्यो ऽप आनीय तस्मिन्नेतानꣳशून्गृह्णाति ॥४॥

उपयामगृहीतोऽस्यग्नये त्वा गायत्रच्छन्दसं गृह्णामीति गायत्रं प्रातः सवनं तत्प्रातः सवनं प्रबृहतीन्द्राय त्वा त्रिष्टुप्च्छन्दसं गृह्णामीति त्रैष्टुभं माध्यन्दिनꣳ सवनं तन्माध्यन्दिनꣳ सवनं प्रबृहति विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णामीति जागतं तृतीयसवनं तत्तृतीय

14. This (*graha*) should not be drawn for everybody, since this is the self of his (sacrifice). Self is everything and everything should not be done for everybody (indiscriminately). For him who is well-known (to the Adhvaryu), it can be drawn. One who is learned (in Vedic lore), by him it is achieved (even) by his study itself.

15. It should be drawn at (a sacrifice) where thousand (cows are *dakṣiṇā*). Because thousand (cows for *dakṣiṇā*) is everything and this *Aṁśu graha* is everything. In *Sarvavedas* (it can be drawn where everything is given as *dakṣiṇā*). Because *Sarvavedas* is everything and this *Aṁśu graha* is everything. In the *Satra Yāga* it can be drawn, because *Satra Yāga* is everything and the *Aṁśu graha* is everything. It can be drawn in *Vājapeya, Rājasūya* and *Sarvapṛṣṭha* sacrifices. (First Brāhmaṇa Ends)

## BRĀHMAṆA II

1. Now the *Aṁśu graha* is indeed, Prajāpati and it is the body of this (sacrifice) for Prajāpati, indeed is the body. And the *Adābhya graha* is no other than *Vāk* (speech). When he draws the *Aṁśu graha* and then draws the *Adābhya Graha*, he thereby fashions the body of this (sacrifice) and then establishes that speech therein.

2. Now the *Aṁśu* is indeed the mind and the *Adābhya* is the speech. The *Aṁśu* is the out-breathing and the *Adābhya* is in-breathing, *Aṁśu* is the eye itself and *Adābhya* is the ear. He draws these two *grahas* for the sake of wholeness and completeness.

3. Now the gods and the Asuras, both of them born of Prajāpati, were quarelling. It was for this very sacrifice they clamoured with Prajāpati (saying). "This one shall be ours; this one shall be ours". Then the gods saw this *graha*, this *Adābhya graha*. They captured the (three) *savanas* (Soma services) and took possession of the whole sacrifice. They excluded their enemies, the Asuras from the sacrifice.

4. They said "Surely we have destroyed (*adabhāma*) them (the Asuras)". Hence (this *graha*) called *Adābhya*. "They (Asuras) have found us undestroyable (*adābhyas*)". Therefore also it is called *Adābhya*. The *Adābhya* being speech, this speech is indestructible. Therefore also it is (called) *Adābhya*. He who knows this and draws it (the *Adābhya graha*) captures the entire sacrifice from the spiteful enemy. He drives away his spiteful enemy from the sacrifice itself and excludes him from it. In which vessel (the *Audumbara* vessel) he draws the *Aṁśu graha*, in that same vessel, he brings water from the *Nigrābhya* (water kept in the square vessel of the Hotṛ for drenching the Soma plant) and in that (water) he puts those *aṁśus* (Soma plants).

5. "Thou art taken with a support. For Agni I take thee possessed of the Gāyatrī metre" for, the morning *savana* belongs to Gāyatrī, he thus comes to possess the morning *savana*. "For Indra, I take thee possessed of the Triṣṭubh metre" for, the

सवनं प्रबृहत्यनुष्टुप्तेऽभिगर इति यद्वा[1] ऊर्ध्वꣳसवनेभ्यस्तदानुष्टुभं तदेवैतत्प्रबृहति तन्नाभिषुणोति वज्रो वै ग्रावा वागदाभ्यो नेद्वज्रेण वाचꣳ हिनसानीति ॥५॥

अꣳशूनेवाधूनोति व्रेशीनां त्वा पत्मन्ना धूनोमि कुकूननानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि मध्वन्तमानां[2] त्वा पत्मन्नाधूनोमीत्येता वै दैव्या आपः स याश्चैव दैव्या आपो याश्चेमा मानुष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसं दधाति शुक्रं त्वा शुक्र आधूनोमीति शुक्रꣳह्येनमेतच्छुक्र आधूनोम्यह्नो रूपे सूर्यस्य रश्मिष्विति तदह्नश्चैवैतद्रूपे सूर्यस्य च रश्मिष्वाधूनोति ककुहꣳ रूपं वृषभस्य रोचते बृहत्सोमः सोमस्यपुरोगाः शुक्रः शुक्रस्य पुरोगा इति तत्सोममेवैतत्सोमस्य पुरोगां करोति शुक्रꣳ शुक्रस्य पुरोगां यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामीत्येतद्ध वा अस्यादाभ्यं नाम जागृवि यद्वाक्तद्वाचमेवैतद्वाचे गृह्णाति तस्मादाह[3] तस्मै त्वा गृह्णामीति ॥६॥

अथोपनिष्क्रम्य जुहोति तस्मै ते सोम सोमाय स्वाहेति तत्सोमायैवैतत्सोमं जुहोति तथा वाचमग्नौ न प्रवृणक्त्यथ हिरण्यमभिव्यनिति तस्योक्त एव बन्धुस्तस्य तावत्य एव दक्षिणाः ॥७॥

अथाꣳशून्पुनरप्यर्जत्युशिक्त्वं देव सोमाग्नेः प्रियं पाथो ऽपीहि वशी त्वं देवसोमेन्द्रस्य प्रियं पाथोऽपीहि। अस्मत्सखा त्वं देवसोम विश्वेषां देवानां प्रियं पाथो ऽपीहीति सवनानि वा अदः प्रबृहति तान्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामभिर्यदत ऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तन्वते ॥८॥ इति द्वितीयं ब्राह्मणम् ॥

### अथ तृतीयं ब्राह्मणम्

देवा ह वै सत्रं निषेदुः श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेषाꣳहान्नाद्यमभिजितं तद्धैभ्योऽपचिक्रमिषांचकार पशवो वा अन्नाद्यं पशवोऽन्नं ते हैभ्यो ऽपचिक्रमिषां चक्रुर्यद्वै न इमे श्रान्ता न हिꣳस्युः कथꣳस्विन्नः सक्ष्यन्त इति ॥१॥

१. तद्वा TE

२. MD - मदिन्तमानां, मधुंतमानां (Harisvami)
Kāṇva- मध्वन्तमाना 8-30

३. तस्मादा तस्मै TE

midday *savana* belongs to Triṣṭubh, he thus comes to possess the Jagatī metre, for, the third *savana* belongs to Jagatī; he thus comes to possess the third *savana*. "Anuṣṭubh is thy song of praise". Whatever is subsequent to the (three) *savanas* they belong to the Anuṣṭubh metre. That he now comes to possess. He does not press this (Soma plants) for, the (pressing) stone is thunderbolt and the *Adābhya* is *vāk* (speech). Lest he should injure speech by thunderbolt (he does not press).

**6.** He merely shakes (the vessel) with the Soma plants (saying) "In the flow of the streaming (waters) I waft thee; in the flow of the girgling (waters) I waft thee; in the flow of the jubilent (waters) I waft thee. In the flow of the most sweet (waters) I waft thee. These doubtless are the divine waters.. With these which are divine waters and with these which are human waters—with both of them, he bestows sap (into that *graha*). (He further says) "Thee, the bright, I waft in the bright (waters)" for, he indeed wafts the bright one in the bright (waters). "In the light of the day; in the rays of the Sun"—he thus wafts it both in the light of the day in the rays of the Sun. To the Sun (who showers rays) (who is a bull) this form of a hump (a ball) is quite pleasing. Soma is the leader of *soma*. The bright is the leader of the bright". Thus *soma* juice is made the leader of Soma, the bright one for the bright. "O! Soma, that name of *Adābhya* which you have, awaken (in that form), I am drawing you for that (*Adābhya graha*). This is to activise his name of *Adābhya* which is *vāk* (speech). So he draws speech for the speech. So he says "I am drawing you for that".

**7.** Then stepping out (of the *Havirdhāna*) he offers (in the *Āhavanīya*) (saying) "To you that Soma—*Svāhā* to Soma"—Thus he offers *soma* juice unto Soma himself and so does not throw speech into the fire. Then he smells the piece of gold. Its significance has been told. For this the (amount of) *dakṣiṇā* is the same (as for the *Aṁśu graha*).

**8.** He then puts back the Soma plants (in the heap of Soma plants in the *Havirdhāna*) (saying) "Enter thou gladly Agni's favourite seat, O divine Soma; enter thou willingly into Indra's favourite seat; O divine Soma. Because you are our friend. You O divine Soma enter into the favourite seat of the *Viśvedevas*". On the former occasion he captured the (three) *savanas*; he now restores them again and make them fresh. With them so refreshed, he performs that (part of the) sacrifice which is yet remaining. (Second Brāhmaṇa Ends)

## BRĀHMAṆA III

**1.** Now, once on a time, the gods sat down (to perform) a *satra*, (sacrificial session), thinking "May we attain excellence, may we attain fame and may we be eaters of food". That same food gained by them wished to get away from them. Food being cattle, it was the cattle which wanted to get away from them (thinking) "These gods are tired and they may eat us up; (can't say) how they will treat us".

तदु वै देवा अस्पृण्वत तद्गृहेषु न्ययच्छन्त तथैभ्य एतदन्नाद्यं नापाक्रामत्तथो[1] वा एत आसते सत्रं य आसते सत्रꣳश्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेषाꣳहान्नाद्यमभिजितं तद्धैभ्यो ऽपचिक्रमिषति पशवो वा अन्नाद्यं पशवोऽन्नं ते हैभ्योऽपचिक्रमिषति यद्वै न इमे श्रान्ता न हिꣳस्युः कथꣳस्विन्नः सक्ष्यन्त इति ॥२॥

स गार्हपत्ये द्वे आहुती जुहोति गृहा वै गार्हपत्यस्तद्गृहेष्वेतदन्नाद्यं नियच्छन्ति तथैभ्य एतदन्नाद्यं नापक्रामति तथो वा अस्मादशनमुपनिहितं तद्धास्मादपचिक्रमिषति यद्वै मायं न हिꣳस्यात्कथꣳस्विन्मा सक्ष्यत इति ॥३॥

स परस्तादग्र आदधीत[2] द्विर्वा त्रिर्वा तदिदमशनं परस्तादर्वागुपनिवदति तद्वेद न वै मा हिनस्तीति तमुपनिः श्रयते स प्रियोऽन्नस्य भवत्यन्नादो य एवं विद्वानेतद्व्रतं चरति ॥४॥

तद्वा एतद्दशमेऽहनि क्रियत एतत्सत्रोत्थानं तदेको हैषां वाचं यमो भवत्यथेतरे वितिष्ठन्ते विस[3] तिष्ठते यौ वितिष्ठासतेऽश्नाति[4] स यो जिघत्सति ॥ ५ ॥

तेऽपराह्ने गार्हपत्यमुपसमायन्ति तेष्वन्वारब्धेष्वध्वर्युर्जुहोति तदध्वर्योर्न्वेव होमो यदध्वर्युर्न विद्याद्गृहपतिर्जुहुयाद्यदि गृहपतिर्न विद्यादपि य एव कश्च विद्यात्स जुहुयात् ॥ ६ ॥

स जुहोतीह रतिरिह रमध्वमिति पशूनेवैतदाहेह धृतिरिह स्वधृतिः स्वाहेति पशूनेवैतदाह ॥ ७ ॥

अथ द्वितीयां जुहोत्युपसृजन्धरुणं मात्र इत्यग्निमेवैतदस्यै पृथिव्या उपसृजन्नाह धरुणो मातरं धयन्नित्यग्निमेवैतदिमां पृथिवीं धयन्तमाह रायस्पोषमस्मासु दीधरत्स्वाहेति पशवो वै रायस्पोषः पशूनस्मासु दीधर[5]दित्येवैतदाह ॥ ८ ॥

१. नापक्रामत् TE
२. आददीत Ca, see notes
३. वितिष्ठन्तेऽवतिष्ठते V 1, H
४. ऽश्नोति TE
५. See notes

2. This the gods saw through and they secured them in the houses. Hence this food (cattle) did not get away from them. In like manner, now these (Yajamānas) are sitting down in a *Satra yāga*. They sit down (to perform) a *Satra yāga* (thinking) "May we attain excellence, may we attain fame and may we become eaters of food". The food gained by them wishes to get away from them. Food is, forsooth the cattle. They (the cattle) are wishing to get away from them (thinking) "These (Yajamānas) are exhausted; they may eat us up; (can't say) how they will treat us".

3. He (the Yajamāna) offers these two oblations into the *Gārhapatya*—for, *Gārhapatya* is the houses. Thus they restrain this food (cattle) in the houses (*gṛhas*); so that this food does not get away from them. This food that is kept in custody still wants to go away (thinking) "These (Yajamānas) may harm us; (can't say) how they will treat us".

4. He takes from the edges of the top portion of this food (in bits) twice or thrice. Later from the bottom, he takes a pinch. By this (the food) realises "he will not harm me (eat me up)". So it goes near him without fear. He becomes friendly for the food. He who knows thus and observes this rite becomes eater of food.

5. This then is done on the tenth day which is known as *Satrotthāna* (rising form the session). From among them (who sit down in the *Satra yāga*); one controls his speech (observes silence). Others depart (*vitiṣṭhata*). He who stands aloof (*vitiṣṭhati*) and wants to go away (*vitiṣṭhāsata*) and who wishes to eat, he eats.

6. They assemble at the *Gārhapatya* in the afternoon. When they start, the Adhvaryu makes the offering. It is the offering to be done by the Adhvaryu. If the Adhvaryu does not know that the *Gṛhapati* himself can offer. If the *Gṛhapati* does not know that, anybody who knows it can make the offering.

7. He offers (saying) "Here is joy; here Ye rejoice". He addresses the cattle thus. "Here is stability; here is your own stability-*Svāhā*". He addresses thus the cattle.

8. Then he makes the second offering (saying) "Letting the suckling calf to the mother"- he says this only by way of letting fire go to this earth. By saying 'a suckling calf drinking from the mother' he only refers to the fire suckling the (moisture of the) earth. (He says) "May he maintain increase of wealth among us—*Svāhā*". Increase of wealth is cattle and he only means 'let us be enriched with cattle'.

ते प्राञ्चो निःसृप्योत्तरेण परीत्य पश्चात्प्राञ्चो हविर्धानं प्रपद्यन्ते पुरस्ताद्वै प्रत्यञ्चस्तꣳस्यमाना अथैवꣳसत्रोत्थाने ॥ ९ ॥

स उत्तरस्य हविर्धानस्य दक्षिणां कूबरीमभिपद्य सत्रस्यर्धिरिति तत्सामाभिगायत्युत्तरवेदेर्वोत्तरस्याꣳश्रोणा उत्तरस्य त्वेव हविर्धानस्य दक्षिणां कूबरीमभिपद्य तदेव सत्रस्यर्धिमभिगायति ॥ १० ॥

अगन्म ज्योतिरमृता अभूमेति ज्योतिर्ह्येते यन्ति ये सत्रमासतेऽमृता ह्येते भवन्ति दिवं पृथिव्या अध्यारुहामेति दिवꣳह्येते पृथिव्या आरोहन्ति ये सत्रमासते विदाम देवानिति देवान् ह्येते विन्दन्ति ये सत्रमासते स्वर्ज्योतिरिति निधनमुपावयन्ति स्वर्ह्येते यन्ति ये सत्रमासते ज्योतिर्ह्येते भवन्ति तस्मात्स्वर्ज्योतिरिति निधनमुपावयन्ति स यः सत्रस्यर्धिमभिगायति राद्धिमेवैभ्य एतदाशास्ते राध्नुवन्त्येवैतत्त्रिरभिगीय[६] साम ॥ ११ ॥

अथ दक्षिणस्य हविर्धानस्याधोऽधोक्षं प्राञ्चो निःसर्पन्ति युवं तमिन्द्रा पर्वता पुरोयुधा यो नः पृतन्यादप तं तमिद्धतं वज्रेण तं तमिद्धतम् । दूरे चत्तायच्छन्त्सद्गहनं यदि नक्षदस्माकꣳशत्रून्परि शूर विश्वतो दर्मा दर्शीष्ट विश्वत इत्येतयातिच्छन्दसा सर्वं वा अत्यतिच्छन्दाः सर्वेणैवैतत्पाप्मानमपघ्नते तथैनान्पाप्मनोऽभ्यत्येत्यथ यदधोऽधोक्षं वज्रो वा अक्षो वज्रेणैवैतत्पाप्मानमपघ्नते तथैनान्पाप्मनोऽभ्यत्येति स यथा हिस्त्वचो निर्मुच्येतैवꣳसर्वस्मात्पाप्मनो निर्मुच्य प्राञ्चो निःसर्पन्ति प्राञ्चो निःसृप्योत्तरेण परीत्य पुरस्तात्प्रत्यञ्चःसदः प्रसर्पन्ति पश्चाद्वै प्राञ्चस्तꣳस्यमाना अथैवꣳसत्रोत्थाने ॥ १२ ॥

ते यथाधिष्ण्यं व्युपविशन्ति तदुद्गाता सामाभिगायति सर्पराज्ञ्या ऋक्षु स्वयं प्रस्तुतमनुपगीतं यथान्यो नोपशृणुयादति ह रेचयेद्यदन्यः प्रस्तुयादति ह रेचयेद्यदन्य उरुगायेदति ह रेचयेद्यदन्य उपशृणुयात्तस्मात्स्वयं प्रस्तुतमनुपगीतं यथान्यो नोपशृणुयात् ॥ १३ ॥

स यदुद्गाता सामाभिगायति वाचो ह वै रसोऽभिजितो देवानाꣳस इमां पृथिवीं पराङतिसिसृप्सांचकारेयं वै पृथिवी वाक्तस्या अस्या रस ओषधयो वनस्पतयो

६. See notes

